
CASIO
ताल मिलाओ धूम मचाओ!
© 1991 CASIO
अब झूमिए मस्ती में कैसिओ कीबोर्ड के साथ, क्योंकि इसमें है सुर और ताल का ऐसा अनोखा मेल कि आपका दिल गा उठे और कदम थिरकने लगें अपनी मनपसन्द धुनों के साथ। तो बस शुरू हो जाइये और फैला दीजिये अपनी मस्ती का रंग और कैसिओ की उमंग, चारों ओर!
SOUND KIDS
RAP-1
32 मिनी कीज़ ● 25 पी सी एम प्रीसेट टोन्स ● 30 रैप पैटर्न्स ● बिल्ट इन "स्क्रैच" डिस्क ● वॉइस इफैक्टर फंक्शन ● 3 बिल्ट इन इफैक्ट पैड्स ● मिनी माइक्रोफ़ोन अटैच्ड
SA-21
32 मिनी कीज़ ● 100 पी सी एम प्रीसेट टोन्स ● 19 पी सी एम ऑटो रिद्म्स ● 13 "सुपर एकम्पनीमेन्ट" बैकिंग पैटर्न्स ● 5 बिल्ट इन ड्रम पैड्स ● 5 प्रीसेट डिमान्सट्रेशन ट्यून्स ● ड्वैल स्पीकर सिस्टम
KS-02
32 मिनी कीज़ ● 8 पी सी एम प्रीसेट टोन्स ● आर ओ एम पैक कम्पैटिबल ● मैलोडी गाइड फंक्शन ● 5 बिल्ट इन साउन्ड इफैक्ट पैड्स ● 6 बिल्ट इन डिमॉन्सट्रेशन ट्यून्स ● मिनी माइक्रोफ़ोन अटैच्ड ● कैरिइंग हैन्डल
CITY MUSIC CO., PTE LTD.
Singapore Tel: 3377058, 3377545
ONFLO MUSIC CO., LTD.
Hong Kong Tel: 722 4195
RAINBOW PHOTO FINISHERS PTE LTD.
Nepal, Kathmandu Tel: 221724
GENERAL ENTERPRISES COMPANY
U.A.E., Dubai Tel: 224131/2/3
MAHMOOD SALEH ABBAR CO.
Saudi Arabia, Jeddah Tel: (02)6473995
ARABIAN CAR MARKETING CO.,LTD.
Oman Tel: 793741
CASIO COMPUTER CO., LTD.
Tokyo, Japan.
M-9111 RAPCI HN

# GET OFF TO A FLYING START *with*




LION
## PREMIER® HB PENCILS

Supersmooth for effortless writing. Micronized lead for unbreakable points. Grace the desks of executives and others with style.

LION
## PINKY® PENCILS

Perfect classmates. Pretty & Practical. Colourful designs, strongly bonded lead for unbreakable points, give it an edge over the competition.






LION *Gee-flo*® BALLPENS

035 carbine 050 carborite

**Tungsten carbide tips.**
Made with Swiss technology.
Unbeatable points. Sharp. Smooth. Non-smudging. Race across the page. Choice of red, black and blue refills. Mini-marvels at a marvellous price.




**LION PENCILS LTD.**
95, Parijat Marine Drive, Bombay 400 002.

BENSON & HEDGES WORLD CUP 1992

**OFFICIAL LICENSEE OF THE WORLD CUP**

National-766

# चन्दमामा

मे-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'　　　　सञ्चालकः– 'नागिरेड्डी'


## जगतः सौन्दर्यस्य वर्धनम्

सर्वेषां मानवानां मनसि एषः विचारः स्यात्– एतस्य जगतः सौन्दर्यवर्धनं कथम्? इति। जगत् इति पदेन न केवलं सुविज्ञातं भौगोलिकास्तित्वमात्रं गृह्यते; पर्वताः, नद्यः, समुद्रः, स्थलम् इत्यादीनि केवलानि अपि न गृह्यन्ते; अपि तु पशवः, पक्षिणः, तरुगुल्मादयः, कृमिकीटादयः अपि गृह्यन्ते। मानवाः अपि तेनैव पदेन सङ्गृहीताः भवन्ति इति तु न पुनर्वक्तव्यम्।

मानवः इतरजन्तुभ्यः भिन्नः अस्ति। चिन्तनशक्तियुक्तत्वं मानवमात्रस्य वैशिष्ट्यम्। हिताहितं कार्याकार्यं च विवेक्तुं सामर्थ्यम् अस्ति तस्य। मनोवाग्व्यवहाराः अन्येषां सन्तोषाय भवन्ति उत न इति विवेक्तुम् अपि सामर्थ्यम् अस्ति तस्य।

प्रसिद्धः कविः मिल्टन् वदति– "मनः एव वासस्थलं स्वर्गं विधातुम् अर्हति, स्वर्गम् अपि नरकीकर्तुम् अर्हति तत्" इति। 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति हि गीतावचनम्।

अतः जगतः सौन्दर्यस्य वर्धनं विरूपतासम्पादनं वा मानवाधीनम् अस्ति। अस्माकं जीवनशैली एव अन्यान् तोषयितुम् अर्हति, जगतः सौन्दर्यं वर्धयितुम् अपि अर्हति।

जगन्नियामकः विधाता सर्वेषां जीविनां जीवनविधानं निश्चितवान् अस्ति। किन्तु मानवानाम् अस्माकं जीवनविधानं कथं स्यात् इति निश्चयः तु अस्मदधीनः, न तु भगवदधीनः।


सम्पुटः–९　　　　मे–१९९२　　　　सञ्चिका–२

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००






नई उमर के नये रंग
मौज ही मौज
स्कूल में आए
नए फ़ेविक्रिल
स्टूडेंट पोस्टर कलर्स
ऐसा रंग जमाएं
रंग मुलायम उभरा-उभरा
तोता—हरा-हरा लगे खरा
चटख लाल, नीला,
चमकीला
सफेद निराला ज्यों बर्फीला
हर रंग अलबेला
तो झटपट चित्रों में रंग भरो
नए फेविक्रिल स्टूडेंट
पोस्टर कलर्स के संग
मौज करो !
देख तुम्हारा काम और
इसका दाम मम्मी हुई हैरान !
मुफ़्त
पेंट-ए-पोस्टर
पाने के लिए इस पते पर लिखें—फ़ेविक्रिल, पो. बॉक्स 17437
अंधेरी (पूर्व), बंबई- 400 059.
नए
पिडिलाइट
फ़ेविक्रिल®
स्टूडेंट पोस्टर कलर्स
फ़ेविकोल ब्राण्ड एड्हेसिव्स के निर्माता पिडिलाइट की ओर से
मुफ़्त
हर लिलिपुट किट के साथ स्टेन्सिल
STUDENTS' POSTER COL
Fevicryl
everest/91/PIL/117/HIN
कृपया मेरे लिए मुफ़्त फ़ेविक्रिल पेंट-ए-पोस्टर तुरंत भेज दें.
नाम :
उम्र :
पता :
स्कूल
CDM

वार्ताविशेषः–




# पुनरन्यत् राष्ट्रमण्डलम्

डिसेम्बर्मासस्य प्रथमे सप्ताहे भवन्तः विविधासु पत्रिकासु प्रकाशितानि विविधानि शिरोनामानि पठितवन्तः स्युः– 'सोवियत्सङ्घस्य पतनम्' 'साम्यवादस्य कथा समाप्ता' 'सोवियत्सङ्घः इतिहासमात्रम् इदानीम्' इत्यादीनि।

सोवियत् सङ्घनाम्ना ख्याते रशियादेशे प्रवृत्ताः काश्चन अविस्मरणीयाः घटनाः स्मारयन्ति एतानि पत्रिकासु आगतानि शिरोनामानि।

सोवियत्सङ्घः इदानीं बहुधा विभक्तः अस्ति। तत्र इदानीं 'स्वतन्त्रराष्ट्राणां मण्डलम्' (कामन्वेल्थ् इण्डिपेण्डेन्ट् स्टेट्स्–सि.ऐ.एस्.) निर्मितम् अस्ति।

'राष्ट्रमण्डलम्' (कामन्वेल्थ्) इति पदम् इदानीं सुपरिचितम्। एतस्य राजनैतिकः अर्थः यत् तादृशानां देशानां समूहः, ये च तादृशस्य शक्तिशालिनः ब्रिटिश्साम्राज्यस्य उपनिवेशाः आसन्, यस्य च साम्राज्यस्य अस्तङ्गतिः एव नास्ति इति वचनं श्रूयते स्म।'

भारतं राष्ट्रमण्डलीयः देशः। पाकिस्थानदेशः अपि तादृशः एव। एतदतिरिच्य श्रीलङ्का, सिङ्गपुरम्, आस्ट्रेलिया, केनडा इत्यादयः

चत्वारिंशदधिकाः देशाः राष्ट्रमण्डलस्य सदस्याः सन्ति।

नूतने राष्ट्रमण्डले (सि.ऐ.एस्.) द्वादशगणराज्यानि सन्ति, यानि च पूर्वं सोवियत् सङ्घस्य अङ्गानि आसन्।

१९१७ तमे वर्षे अक्टोबर्मासे लेनिन् ट्राट्स्कीनेतृत्वे जनाः जारचक्रवर्तिनं पदात् च्यावितवन्तः। तदा तत्र समाजवादिगणराज्यं (यु.एस्.एस्.आर्.) स्थापितम् अभवत्।

एतस्मिन् एव काले तत्र श्रमिकवर्गेण अधिकारसूत्राणि गृहीतानि। अतः तत्र साम्यवादिपक्षस्य (कम्यूनिष्ट्) शासनम् आरब्धम्।

गतेषु केषुचित् वर्षेषु सोवियत्गणराज्ये कश्चन कोलाहलः श्रूयते स्म। एष्टोनिया, लाट्विया लिथुवेनिया इत्येतानि त्रीणि गणराज्यानि सोवियत्सङ्घतः पृथग्भवितुं निश्चयम् अकुर्वन्।

तदा तत्रत्यः राष्ट्रपतिः गोर्बचेव्वर्यः नूतनां सङ्घीयसन्धिम् उपस्थापितवान्। तस्य आशयः आसीत् यत् अन्यानि गणराज्यानि एतं सन्धिम् अङ्गीकुर्वन्ति इति।

किन्तु बहूनि गणराज्यानि स्वतन्त्रताप्राप्त्यर्थम् उत्सुकानि आसन्। अतः तानि गोर्बचेव्वर्येण आयोजिते समावेशे अनुपस्थितानि आसन्, सन्धिप्रस्तावं तिरस्कृतवन्ति च।

गोर्बचेव्वर्यः राष्ट्रपतिस्थानार्थं त्यागपत्रं समर्प्य रशियन्फेडरेषन्-अध्यक्षाय बोरिस् येल्सिन्वर्याय अधिकारं समर्पितवान्।

गोर्बचेव्वर्येण उपस्थापिते सन्धौ परिसङ्घ (कन्फेडरेषन्) प्रस्तावः कृतः आसीत्। किन्तु येल्स्तिन्वर्यः डिसेम्बरमासे ७ दिनाङ्के उद्घोषितवान् यत् समुदाय(कम्यूनिटी)कल्पना पुरस्क्रियते इति।

अन्ते राष्ट्रमण्डलकल्पना(कामन्-वेल्थ्) सर्वैः अङ्गीकृता अभवत्। एतस्य अङ्गभूतानि गणराज्यानि स्वतन्त्राणि भवन्ति।

राष्ट्रमण्डलव्यवस्थायाम् अपि कोऽपि क्लेशः नास्ति इति न। तत्रापि काश्चन समस्याः परिहरणीयाः सन्ति, केषुचित् विषयेषु स्पष्टा धारणा आश्रयणीया अस्ति। समष्टिरूपा मुद्राव्यवस्था अर्थव्यवस्था च, एकीकृतसुरक्षाव्यवस्था, अण्वस्त्राणां प्रभुत्वम् इत्यादयः अन्या अपि काश्चन समस्याः जागरूकतया परिहरणीयाः सन्ति तत्र।

विंशतितमशतकस्य चरित्रे १९१७ तमे वर्षे प्रवृत्तः रशियाविप्लवः काचित् प्रमुखा घटना। एतस्याः केचन परिणामाः दृश्यमानाः सन्ति। इतोऽपि के परिणामाः दृश्येरन् इति सकुतूहलं पश्यन् अस्ति लोकः।



# मातृधर्मः

राधारमणपुरे शेषगिरिः इति कश्चित् आसीत्। तस्य पत्न्याः नाम लक्ष्मीः इति। तयोः एकमात्रम् अपत्यं माधवो नाम।

लक्ष्म्याः अनुजा एकां पुत्रीं प्रसूय परलोकं गतवती। लक्ष्मीः तां स्वगृहम् आनीय पुत्रीवत् पालितवती। तस्याः नाम मल्लिका। मल्लिका यद्यत् करोति तत्सर्वं लक्ष्म्यै नितरां रोचते। किन्तु शेषगिरिः पत्नीं निन्दति यत् लालनम् अधिकं जातम् इति। तदा लक्ष्मीः कोपेन— "भगिनीपुत्री अनाथा मा भवतु इति उद्देशेन अहम् एतां गृहं प्रति आनीतवती। किन्तु सा भवत्याः पुत्री न खलु? अतः एवम् अनादरः भवतः। सर्वं मम दौर्भाग्यस्य फलम्" इति वदन्ती अश्रूणि स्रावयति स्म।

गच्छता कालेन मल्लिका प्राप्तवयस्का जाता। तस्याः निमित्तं वरान्वेषणम् आरब्धवान् शेषगिरिः। सर्वेषु वरेषु कमपि एकं दोषम् उद्भाव्य निराकरणं प्रदर्शयतः स्म मल्लिका लक्ष्मीः च। अतः मल्लिकायाः विवाहः शीघ्रं न जातः।

किन्तु अन्ते सौभाग्यवशात् राधारमणपुरवासी गिरिधरः नाम युवकः मल्लिकया अङ्गीकृतः। बधूपरीक्षादिने मल्लिका विनयेन एव व्यवहरन्ती वरपक्षीयैः पृष्टानां सर्वेषाम् उत्तरं विनयेन एव दत्तवती। अतः वरपक्षीयाः सन्तुष्टाः अभवन्। गिरिधर-मल्लिकयोः विवाहस्य मुहूर्तः निश्चितः अभवत्।

बधूपरीक्षादिने वरपक्षीयाणां निर्गमनस्य अनन्तरं लक्ष्मीः पतिम् उक्तवती— "मल्लिका दुरहङ्कारिणी, अविधेया इति सर्वदा निन्दनं करोति स्म खलु भवान्? अद्य पश्यतु तया कथं विनयेन एव व्यवहृतम् इति। सर्वेषां प्रश्नानाम् उचितम् उत्तरं दत्तवती।



गुणवती सा'' इति।

पत्न्याः वचनं श्रुत्वा शेषगिरिः मन्दहासं प्रकटितवान्, तावदेव।

दिनद्वयस्य अनन्तरं सः पत्नीम् उक्तवान्– ''मल्लिकायाः विवाहः तु निश्चितः अस्ति। माधवस्य अपि विवाहः अचिरात् एव यदि निश्चितः भवेत् तर्हि वरं स्यात्'' इति।

''माधवस्य विवाहार्थं त्वरा किमर्थम्? तस्य इतोऽपि पञ्चविंशतिवर्षाणि अपि न अतीतानि'' इति उक्तवती लक्ष्मीः।

''तत् तु सत्यम्। नारायणः स्वपुत्रीं माधवाय दातुम् इच्छन् पुनः पुनः प्रार्थयन् अस्ति। विवाहः अचिरात् एव समाप्तः चेत् सर्वेषां तृप्तिः'' इति उक्तवान् शेषगिरिः।

नारायणः शेषगिरेः बाल्यमित्रम्। नारायणस्य कुटुम्बस्य सर्वान् सदस्यान् सम्यक् जानाति लक्ष्मीः। नारायणस्य पुत्रस्य वेणुगोपालस्य माधवस्य च गाढा मैत्री।

''नारायणस्य भागिनेयः प्राप्तवयस्कः अस्ति, एव खलु? पुनः माधवाय किमर्थं स्वपुत्रीं दातुम् इच्छति नारायणः?'' इति पृष्टवती लक्ष्मीः।

''भागिनेयः तु अस्ति। किन्तु तत्सम्बन्धी विवाहप्रस्तावः छिन्नः अभवत् इति भवती अपि जानाति एव खलु?'' इति खेदेन उक्तवान् शेषगिरिः।

''जानामि अहम्। विवाहप्रस्तावच्छेदस्य कारणं नारायणपुत्र्याः औद्धत्यपूर्णं वचनम् इत्यपि जानामि अहम्'' इति उपहासपूर्वकम् उक्तवती लक्ष्मीः।

लक्ष्म्याः उपहासपूर्वकं वचनं श्रुत्वा शेषगिरिः नितरां खिन्नः। तदा तत्रैव स्थितः माधवः उक्तवान्– ''अम्ब! भवती कमलायाः विषये अन्यथा चिन्तितवती। तस्याः मातुलान्या उक्तम् आसीत् यत् कमलां स्नुषात्वेन गृहं नयामि इति। किन्तु यदा विवाहप्रस्तावः आगतः तदा सा वरदक्षिणा आवश्यकी इति, यौतकरूपेण प्रभूतं सुवर्णं दातव्यम् इति च अपेक्षां प्रकटितवती। विवाहात् पूर्वं ये मम मातापितरौ पीडयन्ति तेषां गृहम् अहं स्नुषात्वेन गन्तुं न इच्छामि –इति उक्तवती कमला। एतां घटनां भवती

अपि जानाति एव। एतस्यां घटनायां कमलायाः अपराधः कोऽपि नास्ति" इति।

"अहो, इदानीं ज्ञातवती अहम्। पिता पुत्रः च तस्याः वराक्याः कमलायाः पक्षपातिनौ। न जाने, दुष्टा तस्याः माता मन्त्रवादिद्वारा किं कारितवती इति। अहं तृणात् अपि अल्पा अत्र। गृहम् आगता सा श्वशुरौ एव गृहात् निष्कासयेत्। यदि तादृशः कालः आगच्छेत् तर्हि कूपः नदी वा शरणं गन्तव्यः भवेत्। सर्वं दौर्भाग्यस्य फलम्" इति वदन्ती अश्रूणि स्रावयन्ती ततः गतवती लक्ष्मीः।

मल्लिकायाः विवाहस्य अनन्तरं मासाभ्यन्तरे एव माधव-कमलयोः विवाहः अपि सम्पन्नः। शुभे दिने दक्षिणपादं गृहस्य अन्तः स्थापयित्वा पतिगृहस्य प्रवेशं कृतवती कमला।

कमलायाः सर्वेषु कार्येषु यङ्किञ्चित् दोषम् उद्भाव्य निन्दति लक्ष्मीः। अलसा इति, मन्दमतिः इति, व्यवहारानभिज्ञा इति च कमलां पुनः पुनः तर्जयति सा। लक्ष्मीः बहुधा पीडयति चेदपि सर्वं मौनं सहते कमला। अल्पं प्रतिरोधम् अपि न प्रदर्शयति सा।

कदाचित् माधवः कमलया सह मल्लिकायाः गृहं गतवान्। किन्तु दशनिमेषाभ्यन्तरे पत्न्या सह प्रत्यागतवान्। कमलायाः शिरसि वस्त्रपट्टिकाबन्धः दृश्यते स्म। तया सह मल्लिका गिरिधरश्चापि आस्ताम्।

कमलायाः शिरसि वस्त्रपट्टिकाबन्धं दृष्ट्वा आतङ्केन पृष्टवान् शेषगिरिः—





"वत्से! शिरसि किं जातम्?" इति।

तदा गिरिधरः– "एतं प्रश्नं भवान् भवत्पुत्रीं मल्लिकां पृच्छति चेदेव वरं स्यात्। किं कमलाम् उद्दिश्य प्रश्नेन?" इति कोपेन उक्तवान्।

लक्ष्मीः क्रोधेन गिरिधरं दृष्टवती। तदा गिरिधरः ताम् उक्तवान्– "भवत्याः लालवतः एषा दुष्टा जाता अस्ति। एषा यस्मिन् दिने मम गृहे पदं स्थापितवती तस्मात् दिनतः गृहस्य शान्तिः एव लुप्ता जाता। नूतना एषा इति महती सहना प्रदर्शिता अस्माभिः। किन्तु तेन एतस्याः दौष्ट्यं नितरां प्रवृद्धम्। अद्य एषा क्षुल्लकस्य कारणस्य निमित्तं क्रोधेन पित्तलकलशेन मम मातरं ताडयितुम् उद्युक्ता। किन्तु तावता गृहं प्रविष्टा कमला मध्ये आगत्य प्रहारं निवारयितुं प्रयत्नं कृतवती। अतः सा ताडिता अभवत्। तस्याः शिरसि क्षतः जातः च। अतः एताम् आकृष्य आनीतवान् अस्मि" इति।

प्रश्नार्थकदृष्ट्या पुत्र्याः मुखं दृष्टवती लक्ष्मीः। एतावत्पर्यन्तं भीतियुक्तया दृष्ट्या सर्वं पश्यन्ती स्थिता मल्लिका इदानीम्– "अम्ब!" इति वदन्ती अश्रूणि स्रावयन्ती धावित्वा मातरम् आलिङ्गितवती। किन्तु पुत्र्याः अपराधं जानती लक्ष्मीः पुत्र्याः सान्त्वनं यथापूर्वं कर्तुं, पुत्र्याः कृत्यं समर्थयितुं वा न शक्तवती।

गिरिधरः क्षणकालस्य अनन्तरं पत्नीम् उद्दिश्य– "अलं रोदनेन। गच्छाव तावत्। इतः परं वा व्यवहारे विवेकः भवतु" इति उक्त्वा तया सह गृहं प्रतिगतवान्।

पुत्रीं जामातरं च 'अद्य अत्रैव तिष्ठताम्' इति वक्तुम् अपि न शक्तवती लक्ष्मीः। खेदेन तस्याः हृदयं मुकुलितम् अस्ति। हृदयतापकारणतः सा गृहे इतस्ततः अटति। गृहकार्याणि कर्तुम् अशक्ता सा हरिकथां श्रोतुं प्रस्थितवन्तं पतिम् अनुसृत्य देवालयं गतवती।

हरिकथां श्रोतुं बहवः आगताः आसन्। अरण्यं गतवन्तौ सीतारामौ स्मरन्त्याः कौसल्यायाः विलापः तद्दिनस्य हरिकथायाः विषयः आसीत्। कौसल्यायाः सीताविषयकं वात्सल्यं सोदाहरणं निरूप्य उक्तवान्

हरिकथाकारः– "लोके प्रायः स्त्रियः द्विविधाः भवन्ति। काश्चन ममतामय्यः स्नेहमूर्तयः च सत्यः मातृवात्सल्यं प्रदर्शयन्ति सर्वत्र। अन्याः काश्चन दर्पं, कोपं च प्रदर्शयन्त्यः सर्वत्र दोषम् एव पश्यन्त्यः श्वश्रूत्वं प्रदर्शयन्ति। वस्तुतः सा एव उत्तमा महिला या पुत्रीं स्नुषां च समानया दृष्ट्या पश्यति। कौसल्या तु आदर्शमूर्तिः। सा स्नुषां पुत्रीसमां किं, प्राणसमां भावयति स्म। या पुत्रीस्नुषयोः विषये भेदभावं प्रदर्शयति सा तु पुत्रीवती अपि वन्ध्या एव" इति।

हरिकथाकारेण बोधिता नीतिः लक्ष्म्याः हृदये सम्यक् लग्ना। गृहे प्रवृत्तायाः घटनायाः कारणतः तस्याः मनः मृदु जातम् आसीत्। तत्र हरिकथानीतिः बीजावापतुल्यं जातम्।

हरिकथां समाप्य गृहं प्रति प्रस्थितौ शेषगिरिः लक्ष्मीः च। मार्गे शेषगिरिः पत्नीम् उक्तवान्– "कौसल्यायाः व्यवहारम् उदाहृत्य हरिकथाकारेण यत् उक्तं तदनुगुणं भवती वन्ध्या एव" इति।

पत्युः वचनं श्रुतवत्याः लक्ष्म्याः दुःखम् उद्गतम्। पुत्रीस्नुषयोः विषये प्रदर्शितं पक्षपातभावं स्मरन्ती दुःखं लज्जां च अनुभवन्ती लक्ष्मीः– "आम्। एतावत्पर्यन्तं मम व्यवहारः निन्द्यः आसीत्। इदानीं मम बुद्धिः शुद्धा जाता अस्ति। मातृविहीना बालिका इति चिन्तयित्वा भगिनीपुत्रीं मल्लिकां व्यामोहवशतः लालितवती। तया कृतानि अनुचितानि कृत्यानि अपि समर्थयन्ती अहं तस्याः परिष्कारं विस्मृतवती। कमला तु योग्या स्नुषा। तथापि तस्याः व्यवहारेषु दोषं द्रष्टुं प्रयत्नं कृतवती। अद्य विवेकः प्राप्तः अस्ति मया। इतः परं कमलां पुत्रीत्वेन भावयन्ती मल्लिकां विवेकं बोधयन्ती उत्तमा महिला भविष्यामि" इति उक्त्वा पत्युः पादौ गृहीतवती।

शेषगिरिः अत्यानन्देन ताम् उत्थापयन्– "दोषं सर्वे कुर्वन्ति एव। कृतं दोषं ज्ञात्वा आत्मनः परिष्कारः करणीयः। एतत् एव विवेकिनां लक्षणम्" इति उक्तवान्।



# चिकित्सायां त्वरा न उचिता

रुद्राचार्यः कश्चन वैद्यः। शरभः नाम युवकः वैद्यशास्त्रस्य अध्ययनार्थं तेन सह निवसति स्म। रुद्राचार्यः विविधानां रोगाणां विवरणं, चिकित्साक्रमम्, औषधोपचारं च विस्तरेण बोधयति स्म। रुद्राचार्यः सर्वम् अपि पुस्तके लिखति स्म।

कदाचित् रुद्राचार्यः शरभम् उक्तवान्– "केषाञ्चित् रोगाणाम् औषधं किमपि न भवति। यथा– हिक्का। कदाचित् हिक्का निरन्तरम् आगच्छति। तादृशे सन्दर्भे कपोले सम्यक् ताडितं चेत् हिक्का स्थगिता भविष्यति" इति।

अत्रान्तरे शकटात् अवतीर्य कश्चन स्थूलः पुरुषः रुद्राचार्यस्य समीपम् आगत्य– "ह्यः रात्रितः हिक्का पीडयन्ती अस्ति। केनापि उपायेन अपि सा न स्थगिता। बहिः आगत्य ......" इति यावत् उक्तवान् तावता, वेगेन अग्रे आगत्य शरभः तं कपोले सम्यक् ताडयित्वा उक्तवान्– "इतः परं चिन्ता नास्ति। हिक्का अपगता" इति।

तदा सः स्थूलः पुरुषः कोपेन– "अये, हिक्काबाधा न मम, अपि तु शकटे उपविष्टवतः मम अग्रजस्य" इति उक्तवान्।

शिष्यस्य अविवेकितां दृष्ट्वा कुपितः रुद्राचार्यः तीक्ष्णदृष्ट्या शरभं दृष्टवान्। 'चिकित्सायां त्वरा न उचिता' इत्यंशम् इदानीं जानन् शरभः लज्जया शिरः अवनमय्य स्थितवान्।





# अपूर्वस्य साहसयात्रा

## १३

(रुद्रपुर्याः युवराज्ञ्याः कण्ठे स्थितं चन्द्रकान्तमणियुक्तं हारम् अपहर्तुं दुष्टः मन्त्री मान्त्रिकः च योजनां कृतवन्तौ। युवराज्ञी सजीवं मह्यम् अर्पणीया इति मान्त्रिकम् आज्ञापितवती मन्त्रवादिनी। दुर्गामातुः मन्दिरम् आगतां युवराज्ञीं सुरङ्गमार्गेण नीत्वा अपहरणीया इति मान्त्रिकादीनां चिन्तनम्। तच्च अपूर्वेण ज्ञातम्। तदनन्तरम्.....)

राजकुमार्याः जन्मदिनोत्सवः आसन्नः अस्ति। 'दुष्टः मन्त्री मान्त्रिकः च यत् दुस्तन्त्रं रचितवन्तौ तत् राजानं निवेदयितुं योग्यः जनः समीरः एव' इति आलोच्य अपूर्वः समीरसमीपं गतवान्।

अपूर्वं दृष्ट्वा समीरः नितरां सन्तुष्टः। अपूर्वेण यत् उक्तं तत् श्रद्धया श्रुतवान् सः। 'भवतः आशयस्य अनुगुणम् अहं राजानं सर्वं निवेदयिष्यामि' इति उक्त्वा अपूर्वेण सह प्रस्थितवान् समीरः।

सा च घोररात्रिः। तस्यां मान्त्रिकः वीरविकटः रहस्यरूपेण मन्त्रिणः गृहं गत्वा द्वारताडनं कृतवान्। मन्त्री वीरविकटं दृष्ट्वा आश्चर्येण पृष्टवान्– "मित्र! किम् एतत्? मध्यरात्रसमये भवतः आगमनं किमर्थम्?" इति।

"मम आगमनं सदा रात्रौ एव खलु? दिने मम आगमनं कदापि दृष्टवान् वा भवान्?"



इति उपहासपूर्वकं पृष्टवान् वीरविकटः।

"कोपः मास्तु श्रीमन्! भवदागमनं दृष्टवतः मम मनसि भावः आगतः यत् काऽपि आपत् आपतिता स्यात् इति। तया भीत्या मया पृष्टम्" इति उक्तवान् मन्त्री।

"आम्। आपत् उपस्थिता अस्ति। अस्माकं रहस्यतन्त्रं केनापि ज्ञातम् अस्ति इति भावयति मम गुरुः मन्त्रवादिनी। अस्माकं व्यवहारं कोऽपि रहसि परिशीलयन् अस्ति इति वदति सा। मम तु प्रश्नः— कथम् एतस्य सम्भवः इति" इति उक्तवान् वीरविकटः।

"एतत् तु सर्वथा असम्भाव्यम्। मन्त्रवादिन्याः कोऽपि भ्रमः स्यात्" इति उक्तवान् मन्त्री।

"भवान् मन्त्रवादिन्याः सामर्थ्यं न जानाति। सा निराधारं कदापि सन्देहं न प्रकटयति। भवान् एतं रहस्यविचारं पत्नीं प्राणसमं मित्रं वा कदाचित् उक्तवान् वा? सम्यक् स्मृत्वा वदतु" इति उक्तवान् मान्त्रिकः।

"नैव। मया कोऽपि न उक्तः। मैत्रीनाम्ना शपे यत् मन्मुखात् रहस्यस्फोटनं कुत्रापि न जातम् इति" इति दृढस्वरेण उक्तवान् मन्त्री।

"भवति मम दृढः विश्वासः अस्ति एव। तथापि जागरूकताविषये कदापि औदासीन्यं न प्रकटनीयम्। विश्वासार्हान् भटान् राजप्रासादं परितः रक्षणकार्ये नियोजयतु। रक्षणकार्यम् अहोरात्रं प्रचलेत्। नूतनः कोऽपि राजानं न पश्येत्। एषा विशेषरक्षणव्यवस्था किमर्थं कृता इति कोऽपि न जानीयात्। यदि कोऽपि कारणं पृच्छति तर्हि भवान् वदतु यत् अपायसम्भावनावार्ता आगता इत्यतः एषा व्यवस्था कृता इति" इति उक्त्वा "सदा जागरूकता भवतु" इति पुनः पुनः उक्त्वा ततः निर्गतवान्।

मान्त्रिकस्य वचनस्य अनुगुणं मन्त्री प्रातः एव राजभवनं परितः रक्षणार्थं विश्वासार्हान् भटान् योजितवान्।

समीरः राजदर्शनं प्राप्तुं प्रयत्नं कृतवान्। किन्तु तदर्थं तेन अनुमतिः न प्राप्ता। समूहे

प्रविश्य कथमपि कार्यं साधयिष्यामि इति चिन्तयित्वा तेन प्रयत्नः कृतः। किन्तु तत्रापि असाफल्यम् एव।

युवराज्ञ्याः जन्मदिनोत्सवः प्राप्तः अस्ति। दुष्टेन मान्त्रिकेण, मन्त्रिणा, मन्त्रवादिन्या च मिलित्वा यत् कुतन्त्रम् आयोजितं तत् कथमपि राजानं वक्तुं न शक्तवान् अपूर्वः। एतस्य साधनं कथम् इत्येव चिन्ता अपूर्वस्य।

'राजा प्रतिदिनं भवनस्य चन्द्रशालायां स्थित्वा सूर्यास्तस्य सौन्दर्यं पश्यति' इति अपूर्वं सूचितवान् समीरः। अपूर्वः चन्द्रशालां दृष्टवान्। तत्र राजा दृष्टः तेन।

अपूर्वः एकस्मिन् तालपत्रे दुष्टानां दुस्तन्त्रं संक्षेपेण निरूप्य 'युवराज्ञ्याः प्रधानार्चकस्य च रक्षणार्थं विशेषव्यवस्था करणीया, युवराज्ञी कदाचित् अपि विग्रहस्य पृष्ठभागं न गच्छेत्' इति लिखित्वा अनतिदूरे स्थितं गृध्रम् आहूतवान्। गृध्रः अपूर्वस्य समीपम् आगत्य पत्रं मुखेन गृहीत्वा वेगेन राजप्रासादम् उद्दिश्य अगच्छत्।

तालपत्रं मुखेन गृहीत्वा डयमानं गृध्रं दृष्ट्वा उत्साहं प्राप्य कश्चन भटः गृध्रं लक्ष्यीकृत्य एकं बाणं प्रयुक्तवान्। बाणः गृध्रे तु न लग्नः। भीतः गृध्रः ततः अन्यस्यां दिशि अधावत्।

एवं भीत्या धावतः गृध्रस्य मुखात् तालपत्रं च्युतं सत् जलेन पूर्णायां परिखायाम् अपतत्। भटेन कृतं बाणप्रयोगं, गृध्रस्य धावनं, पत्रस्य



पतनं वा अपूर्वः समीरः वा न दृष्टवन्तौ। 'गृध्रेण राज्ञे पत्रम् अर्पितम्। युवराज्ञ्याः रक्षणार्थं राजा व्यवस्थां करिष्यति' इति चिन्तयित्वा तौ निश्चिन्तौ जातौ।

उषसि एव जन्मदिनोत्सवनिमित्तकाः विविधाः कार्यक्रमाः आरब्धाः। विविधाः प्रमुखाः, अन्यान्यदेशेभ्यः समागताः राजप्रतिनिधयः, परिवारसदस्याः च युवराज्ञीं दृष्ट्वा शुभाशंसनं कृतवन्तः। समीरः तु जनानां मध्ये सञ्चरन् वार्ताः सङ्गृह्य अपूर्वं निवेदयन् अस्ति।

सायङ्कालसमये युवराज्ञी आलयं प्रति गन्तुं सिद्धा जाता। युवराज्ञीम् अनुसृत्य सहस्रशः जनाः आनन्देन प्रस्थितवन्तः।



राजप्रासादस्य बर्हिभागम् आगत्य राजा युवराज्ञी च जनानां शुभाशंसनं स्वीकृतवन्तौ। राज्ञः मुखे कोऽपि आतङ्कभावः न दृष्टः अपूर्वेण। 'एवं तर्हि मया प्रेषितं पत्रं राज्ञा कथमपि न प्राप्तम्' इति तर्कितवान् अपूर्वः। इदानीं का अन्या गतिः, ऋते गुरुस्मरणात्?

एवम् एव सन्ध्याकालः अतीतः। सखीगणपरिवृता युवराज्ञी परिवारसमेतः राजा च शोभायात्रया दुर्गामन्दिरं प्रति प्रस्थितवन्तौ।

'गृध्रद्वारा प्रेषितं तालपत्रं व्यर्थं जातम्' इत्यत्र सन्देहः न अवशिष्टः। किङ्कर्तव्यतामूढः अपूर्वः चिन्ताक्रान्तः सन् समीरेण सह आलयं प्रति प्रस्थितवान्।

आनन्दतुन्दिला युवराज्ञी सखीभिः सह आलयप्राङ्गणं प्रविष्टवती। अर्चकवेषधारी मान्त्रिकः शिष्यैः सह आगत्य आदरेण तां स्वागतीकृत्य अन्तः नीतवान्। युवराज्ञी देव्याः विग्रहस्य पुरतः स्थित्वा करौ योजयित्वा भक्त्या नमस्कारं कृतवती। अर्चकः कमपि मन्त्रं मन्दं जपन्– "वत्से! भक्ताभीष्टप्रदायिनी देवी प्रदक्षिणपूर्वकं नमस्कृता चेत् मङ्गलं भविष्यति। आगच्छतु, प्रदक्षिणं करोतु" इति उक्त्वा अग्रे प्रस्थितवान्। युवराज्ञी तम् अनुसृतवती।

"युवराज्ञ्याः ऋते कोऽपि अग्रे न गच्छेत्। युवराज्ञीद्वारा काश्चन विशेषपूजाः कारणीयाः सन्ति। भवत्यः सर्वाः मौनम् अत्रैव तिष्ठन्तु" इति युवराज्ञ्याः सखीः उक्त्वा अग्रे प्रस्थितवान् अर्चकवेषधारी मान्त्रिकः।

अर्चकस्य वचनं विरोद्धुम् अशक्ताः परिचारिकाः मौनं तत्रैव स्थितवत्यः।

वञ्चकार्चकस्य शिष्यौ उच्चैः मन्त्रोच्चारणं कृतवन्तौ। घण्टानादः कृतः। अन्यानि वाद्यानि वादितानि। वाद्यादि-ध्वनिकारणतः बहिः स्थितः कोऽपि अन्तः किं प्रवर्तते इति ज्ञातुं न शक्नोति स्म।

युवराज्ञी यदा गर्भगृहस्य पृष्ठभागं गतवती तदा अर्चकवेषधारी मान्त्रिकः तां बलात् गृहीत्वा सुरङ्गमार्गे नीत्वा झटिति स्वयमपि

सुरङ्गमार्गं प्रविश्य सुरङ्गद्वारं पिहितवान्।

राजपरिवारः गर्भगृहात् बहिः एव आसीत्। सर्वं सुसूक्ष्मं परिशीलयन् स्थितः समीरः जनानां मध्यतः वेगेन अग्रे आगत्य उच्चस्वरेण उक्तवान्– "प्रभो, अनिष्टं प्रवृत्तम्। युवराज्ञी दुष्टैः अपहृता। अहो, वञ्चना! अहो, वञ्चना!" इति।

राजा आश्चर्येण तं दृष्टवान्।

"प्रभो, अहं समीरः। मां स्मरति खलु भवान्? युवराज्ञी मान्त्रिकेण अपहृता। मम वचने विश्वसितु कृपया। युवराज्ञी अपहृता" इति उक्तवान् समीरः।

"युवराज्ञी देव्याः आलयं प्रविष्टा अस्ति। तस्याः अपहरणं कथं सम्भाव्यते भवता?" इति पृष्टवान् राजा।

"प्रभो, विवरणार्थं न एषः समयः। युवराज्ञी आलये नास्ति। सुरङ्गमार्गेण नीयमाना अस्ति सा" इति उक्तवान् समीरः।

"एवं वा? मम पुत्री दुष्टैः अपहृता? कथम् एतत्" इति वदन् राजा आलयस्य अन्तः गतवान्। तम् अनुसृत्य गत्वा गर्भगृहे कुत्रापि युवराज्ञीम् अदृष्ट्वा परिचारिकाः उच्चैः आक्रन्दनं कृतवत्यः– "हा हन्त! युवराज्ञी नास्ति अत्र! अहो, अपहृता सा।" इति।

अत्रान्तरे धावनोद्यतान् मान्त्रिकशिष्यान् पश्यन् उच्चैः उक्तवान् समीरः– "प्रभो, वञ्चकान् एतान् बध्नन्तु" इति। भटाः तान् बद्धवन्तः।



"प्रभो, शीघ्रातिशीघ्रं सुरङ्गस्य अपरस्य द्वारस्य समीपं गन्तव्यम् अस्माभिः। विलम्बः न करणीयः" इति उक्तवान् समीरः।

राजा, सेनानायकः, समीरः, समर्थाः केचन भटाः च त्वरया अश्वम् आरुह्य गच्छन्तः अरण्यमध्ये स्थितं सुरङ्गस्य अपरद्वारं प्राप्तवन्तः।

समीरः अश्वात् अवतरन् सेनानायकम् उक्तवान्– "तत्र दृश्यते खलु वृद्धा? मन्त्रवादिनी सा परमदुष्टा। बध्नन्तु ताम्" इति।

"अहो धाष्ट्र्यम्! माम् अपि बन्द्धुं प्रयत्नः वा भवताम्? कदापि न शक्यम् एतत्! भवतः सर्वान् क्षणमात्रेण भस्मीकरिष्यामि" इति



तदा सदानन्दमुनिः मन्दहासपूर्वकम् उक्तवान्– "आं, भवतः वचनं सत्यम् एव। ध्यानमग्नः एव अहम् अपूर्वस्य आह्वानं श्रुत्वा अत्र आगतः। तत्र दृश्यमाना मन्त्रवादिनी न सामान्या। सा महाशक्तिशालिनी, परमदुष्टा, क्रूरातिक्रूरा च। सा अन्येषां यौवनं वशीकृत्य कानिचन शतकानि यावत् जीवितुं समर्था। इदानीं युवराज्ञयाः यौवनम् अपहृत्य स्वयं पुनर्यौवनं प्राप्तव्यम् इति सा योजनां कृतवती अस्ति। तस्याः अन्तिमक्षणः सन्निहितः। तस्याः सर्वाः शक्तीः नाशितवान् अस्मि" इति।

तदा मन्त्रवादिनी– "अये, मुनिवराक! मम सर्वाः शक्तीः नाशयितुं सामर्थ्यं नास्ति भवतः। मम वशे अन्या शक्तिः अवशिष्टा एव" इति उक्त्वा अग्रे किमपि वक्तुम् अशक्नुवती उच्चैः आर्तनादं कृत्वा विकटं हसन्ती अट्टहासं कुर्वती भस्मसात् जाता।

एतत् दृश्यं दृष्ट्वा राजा चकितः सन् सदानन्दमुनिं साष्टाङ्गं नमस्कृत्य गद्गदस्वरेण पृष्टवान्– "महात्मन्! मम पुत्री कुशलिनी खलु?" इति।

"अपूर्वस्य का गतिः जाता? सः कुत्रापि न दृश्यते खलु?" इति आतङ्केन उक्तवान् समीरः।

"युवराज्ञी अपूर्वश्च कुशलिनौ। आत्मनः नाशः सन्निहितः इति यदा ज्ञातं तदा मन्त्रवादिनी मान्त्रिकं मन्त्रबलेन सूचितवती।

उक्त्वा विकृताकारा मन्त्रवादिनी उच्चैः अट्टहासं कृतवती।

वृक्षशाखायां स्थितायाः मन्त्रवादिन्याः विकटं घोरम् अट्टहासं श्रुत्वा भीताः सर्वे परिवृत्य दृष्टवन्तः।

"अये! वृद्धे! निश्चलं तिष्ठतु। अन्यथा भवती एव भस्मसात् भविष्यति" इति तीक्ष्णः गम्भीरश्च कश्चन स्वरः अन्यतः श्रुतः।

इदानीं सर्वेषां दृष्टिः स्वरस्य दिशि गतः। तत्र कश्चन दिव्यः तेजस्वी मुनिपुङ्गवः स्थितः आसीत्। मुनिं दृष्ट्वा समीरः झटिति अग्रे गत्वा मुनिं साष्टाङ्गं नमस्कृत्य– "काऽपि अपरिहार्या समस्या आगता चेत् भवान् स्वयम् उपस्थितः भविष्यति इति अपूर्वेण उक्तम् आसीत्" इति उक्तवान्।

मान्त्रिकः युवराज्ञ्याः कण्ठे स्थितं चन्द्रकान्तमणिं बलात् वशीकृत्य युवराज्ञीम् एव बलिरूपेण अर्पयित्वा आत्मनः रक्षणार्थं प्रयत्नं कृतवान्। किन्तु अत्रान्तरे अपूर्वः मायया गुहां प्रविश्य मान्त्रिकेण सह युद्धं कृत्वा मान्त्रिकं बन्धने स्थापितवान्। इदानीम् अपूर्वः युवराज्ञ्या सह अत्र आगच्छन् अस्ति'' इति उक्तवान् सदानन्दमुनिः।

अत्रान्तरे वटवृक्षस्य समीपे भूमेः अधोभागतः मेघगर्जनसदृशः शब्दः श्रुतः। सर्वेषु पश्यत्सु, कश्चन दिव्यः पुरुषः सुरङ्गद्वारात् बहिः आगत्य बद्धहस्तं वीरविकटम् आकृष्य आनीतवान्। मान्त्रिकः वीरविकटः तु शिरः अवनमय्य स्थितवान् आसीत्। तं दिव्ययुवकम् अनुसृत्य युवराज्ञी अपि आगता। पितरं दृष्ट्वा सा ससन्तोषं पितुः पार्श्वे स्थितवती।

युवकः मुनिं साष्टाङ्गं नमस्कृतवान्। तदा मुनिः तं प्रीत्या स्पृशन्– ''वत्स! अपूर्व! मानवाकारं प्राप्तुं योग्यः समयः आसीत् एषः। तदनुगुणम् आकारः प्राप्तः अस्ति भवता। इतः परम् एषः आकारः स्थिरतया स्थास्यति'' इति उक्त्वा आशीर्वादेन अनुगृहीतवान्।

''तात! अपायात् मां रक्षितवान् एषः एव'' इति अपूर्वं प्रदर्शयन्ती पितरं साभिमानम् उक्तवती युवराज्ञी।

''मित्र! दीर्घायुष्मान् भवतु भवान्। महान् उपकारः कृतः भवता'' इति अपूर्वम् उक्तवान् राजा।



"यदर्थम् अहम् आगतवान् तत् कार्यं सम्पन्नम्। अहम् गच्छामि तावत्" इति उक्तवान् सदानन्दमुनिः।

"मम कर्तव्यम् अपि समाप्तम् एव। अहम् अपि भवता सह आगच्छामि तावत्" इति उक्तवान् अपूर्वः।

"वत्स! भवतः कर्तव्यं न समाप्तम्। अग्रे यत् करणीयम् अस्ति तस्य साधनार्थं भवता एतत् मानवरूपं प्राप्तम् अस्ति। एतावत्पर्यन्तम् अल्पं रूपं प्राप्य अपि यथा धैर्येण साहसेन च व्यवहरन् परोपकारं भवान् कृतवान्, तथैव इतः परम् अपि करणीयम् अस्ति भवता। प्रजानायकत्वेन भवतः कर्तव्यम् इतोऽपि करणीयम् अस्ति" इति हसन् उक्तवान् मुनिः।

"कथं शक्यम् एतत्?" इति सन्देहपूर्वकं पृष्टवान् अपूर्वः।

"एतत्क्षणतः मदीयम् एतत् राज्यं भवदधीनं भावयतु। मम पुत्री यदि भवतः प्रिया स्यात् तर्हि भवन्तं जामातरं कर्तुम् अहं ससन्तोषं सिद्धः अस्मि। राजकुमारी परिणीता चेत् तस्याः मातुलस्य लावण्यपुर्याः अधिपतिः अपि भवान् एव भविष्यति। एतत्सर्वं पूज्यानाम् अनुमतम् एव भवेत् इति भावयामि अहम्" इति उक्तवान् राजा।

अपूर्वः युवराज्ञीं दृष्टवान्। युवराज्ञी लज्जया शिरः अवनमय्य हसन्मुखी स्थिता आसीत्। सदानन्दमुनिः अपूर्वं युवराज्ञीं च स्वसमीपम् आहूय उभयोः अपि करं परस्परं योजयित्वा– "सदा लोकहितम् एव चिन्तयन्तौ भवन्तौ आदर्शदम्पती भवताम्। भवतोः जीवनं सार्थकं भवतु" इति आशिषा अनुगृह्य ततः अदृश्यः अभवत्।

राजा दुष्टं मान्त्रिकं तच्छिष्यान् च कारागारे स्थापितवान्। अपूर्व-युवराज्ञ्योः विवाहः शुभे मुहूर्ते सवैभवं सम्पन्नः। राजा समग्रं राज्यम् अपूर्वाधीनं कृतवान्। अपूर्वः समीरं मन्त्रिपदे नियोज्य न्याय्येन मार्गेण राज्यं पालयन् 'प्रजारञ्जकः' इति कीर्तिं प्राप्तवान्। –(समाप्तम्)








# पापभीरुत्वम्

मध्यरात्रं मध्यदिनम् इव भावयन् त्रिविक्रमः परपीडनम् एव स्वप्रवृत्तिं भावयन्तं वेतालं वशीकर्तुम् इच्छन् पुनरपि वृक्षस्य समीपम् गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्। तदा शवान्तर्गतः वेतालः अवदत्– ''अये राजन्! भवतः धैर्यं साहसं निरन्तरप्रयत्नं च यः कोऽपि श्लाघेत एव। प्रायः मानवानां सर्वे यत्नाः पुण्यप्राप्त्यर्थं भवन्ति। पुण्यकार्यं पापं नाशयति इति जनाः भावयन्ति। भवान् अपि किञ्चन पापं दूरीकर्तुम् इच्छन् पुण्यप्राप्त्यर्थम् एवं श्मशानमार्गे कष्टं सहमानः स्यात्। किन्तु कदाचित् पुण्यार्थं कृतानि कार्याणि पापफलप्रदानि भवन्ति। भवतः जागरणार्थं काञ्चित् कथां श्रावयामि। कथाश्रवणेन विवेकः तु प्राप्यते, मार्गायासः

## वेतालकथा



अपि परिहृतः भविष्यति। अतः श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा—

पूर्वम् उज्जयिनीराज्यं चन्द्रसेनः नाम राजा पालयन् आसीत्। प्रजाः सः पुत्रवत् प्रीत्या पश्यति स्म। कवीनां पण्डितानां च विषये राज्ञः महान् आदरः आसीत्। प्रतिदिनं राजास्थाने कविगोष्ठी शास्त्रचर्चा च प्रचलति स्म।

कदाचित् शिवदत्तः नाम पण्डितः काशीतः आगत्य राजास्थानद्वारे स्थित्वा राजदर्शनम् अपेक्षितवान्। राजा दूतद्वारा वार्तां ज्ञात्वा पण्डितम् आदरेण स्वागतीकृत्य योग्यम् आसनं कल्पितवान्। शिवदत्तः प्रतिभया पाण्डित्येन च राजानं सभासदः पण्डितान् च तर्पितवान्। सन्तुष्टः राजा सिंहासनात् अवतीर्य शिवदत्तम् आलिङ्ग्य स्वकण्ठे स्थितम् अमूल्यं रत्नहारं शिवदत्तस्य कण्ठे स्थापितवान्। अमूल्यम् उपायनं दत्त्वा सत्कृतवान् च।

राज्ञः अनुज्ञां प्राप्य शिवदत्तः काशीं प्रति प्रस्थितवान्। किन्तु दौर्भाग्यवशतः चोराग्रेसरः कश्चन शिवदत्तस्य कण्ठे स्थितं रत्नहारं दृष्ट्वा शिवदत्तं मारयित्वा हारं स्वीकृत्य पलायितवान्। चन्द्रसेनस्य गूढचराः एतां वार्तां श्रुत्वा चोरम् अन्विष्य बद्ध्वा राज्ञः पुरतः उपस्थापितवन्तः।

शिवदत्तस्य दुर्मरणं श्रुतवतः राज्ञः महत् दुःखं क्रोधः च। अतः सः चोराग्रेसरस्य शूलारोपणं विहितवान्।

एतावता अपि राज्ञः चन्द्रसेनस्य मनःशान्तिः तु नास्ति। 'शिवदत्तस्य अपमृत्योः कारणम् अहम् एव' इति चिन्ता बाधते तम्। चिन्ताकारणतः अन्नादिकम् अपि न रोचते तस्मै।

'शिवदत्तस्य परोक्षहन्ता अहम् एव। मया तस्य पाण्डित्यं दृष्ट्वा सत्कारः कृतः। अमूल्यम् उपायनं दत्तम्। किन्तु तदेव उपायनं कालसर्परूपेण परिवृत्तं सत् तस्य मरणस्य कारणं जातम्। एवं, तस्य मरणस्य साक्षात्कारणं चोरः चेदपि परम्पराकारणं तु अहम् एव। यथा शिवदत्तः मया सत्कृतः

तथैव बहवः पण्डिताः कवयः च इतःपूर्वं सत्कृताः। मत्कारणतः कतिजनानाम् आपत् आगता इति न ज्ञायते' इति स्वगतं वदन् राजा शय्याम् आश्रितवान्।

राजकार्येषु राज्ञः आसक्तिः नास्ति। राजवैद्याः महता प्रयत्नेन अपि राज्ञः आधिं दूरीकर्तुं न शक्तवन्तः।

एतादृशे एव सन्दर्भे वेदानन्दः नाम महिमशाली संन्यासी राजास्थानम् आगतवान्। राज्ञी मन्त्री च राज्ञः परिस्थितिं निवेद्य– "कथमपि राज्ञः आधिः निवारणीयः, रक्षणीयाश्च वयम्" इति प्रार्थितवन्तौ।



संन्यासी राज्ञः शयनागारं प्रविष्टवान्। अस्थिपञ्जरम् इव दृश्यमानं राजानं दृष्टवतः संन्यासिनः मनः द्रुतम्।

सः राज्ञः पार्श्वे मञ्चस्य उपरि उपविश्य– "राजन्! क्षत्रियस्य भवतः एतादृशं वैक्लव्यं न युज्यते। युद्धभूमौ भवान् बहून् स्वयं हतवान् स्यात्। बहूनां मरणस्य कारणम् अपि स्यात्। तदा भवता किम् एतादृशं वैक्लव्यम् अनुभूतम्? न खलु? अपराधी चोरः गूढचरैः गृहीतः। राजधर्मं पालयन् भवान् तस्य शूलारोपणं विहितवान्। पण्डितेन शिवदत्तेन तु दैवनिर्णयानुगुणं मरणं प्राप्तम्। पण्डितस्य सम्माननं राज्ञः भवतः कर्तव्यम् आसीत्। तत् भवान् कृतवान्। अनन्तरं याः घटनाः प्रवृत्ताः तासां कारणं भवान् भवितुं न अर्हति। अतः वृथाचिन्तां त्यजतु" इति।

तदा राजा मन्दस्वरेण उक्तवान्– "महात्मन्! अहं कश्चन पापी। चक्षुष्मान् अपि अन्धः इव। मम चिन्तायाः परिहारः एव नास्ति" इति।

वेदानन्दः क्षणकालस्य मौनस्य अनन्तरम् उक्तवान्– "वत्स! अहं मम तपःशक्त्या शिवदत्तम् उज्जीवयामि चेत् भवतः चिन्ता परिहृता भवेत् वा? विचिन्त्य वदतु तावत्" इति।

राजा चन्द्रसेनः क्षणकालं विचिन्त्य करौ योजयित्वा संन्यासिनं नमस्कुर्वन् परमदैन्येन प्रार्थितवान्– "श्रीमन्! शिवदत्तं चोरं चापि

उज्जीवयितुम् अर्हेत् वा भवान्?" इति।

"तावती शक्तिः नास्ति मम। मम समग्रया तपःशक्त्या अहम् एकमात्रम् उज्जीवयितुं शक्नोमि" इति उक्तवान् वेदानन्दः।

"तर्हि शिवदत्तस्यापि उज्जीवनं मास्तु श्रीमन्! जानन् अपि पापभारं किमर्थं वा वर्धयेयम् अहम्?" इति उक्तवान् चन्द्रसेनराजः।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! चन्द्रसेनस्य वचनं सारहीनं खलु? शिवदत्तस्य मरणविषये एव खलु चन्द्रसेनस्य खेदः आसीत्? वेदानन्दः तादृशं शिवदत्तम् उज्जीवयामि इति यदा उक्तवान् तदा किमर्थं मास्तु इति उक्तवान् राजा? शान्तिप्राप्त्यर्थं प्राप्तम् अवकाशं दूरीकुर्वता तेन मूर्खता खलु आचरिता? चोरम् उज्जीवयतु इति किमर्थं तेन उक्तम्? सर्वं परिशीलयामः चेत् राज्ञः मूर्खता एव किल स्फुटा भविष्यति? मम एतेषां प्रश्नानाम् उत्तरं यदि भवान् जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "चन्द्रसेनः मूर्खः इति निर्णयः सर्वथा अनुचितः। युक्तियुक्तं चिन्तनं तस्य। यदि वेदानन्देन शिवदत्तः उज्जीव्येत तर्हि चोराय दत्तः दण्डः अन्याय्यः स्यात्। तावदेव न, वेदानन्दस्य तपःशक्तेः स्वीकरणात् अपि पापभारः वर्धते। अतः एव राजा उक्तवान् यत् शिवदत्तमात्रस्य उज्जीवनं मास्तु, यदि शक्यं तर्हि उभयोः अपि उज्जीवनं भवतु इति। किन्तु संन्यासिना उक्तं यत् एकस्य उज्जीवनार्थं मम सामर्थ्यम् अस्ति, तावदेव इति। तदा राज्ञा शिवदत्तस्यापि उज्जीवनं मास्तु इति उक्तम्। पापभीरुः राजा योग्यं चिन्तनम् एव कृतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






# सौन्दर्यं क्षणिकम्

धर्मपुरस्य केशवः रामकृष्णश्च आत्मीयौ। यदा तौ प्रौढौ जातौ तदा जीवननिर्वहणार्थम् परस्परसुदूरं ग्रामम् आश्रितवन्तौ। तत्रैव तयोः वसतिः स्थिरा जाता। विरलतया यदा तौ मिलतः तदा परस्परवार्तालापेन सुखदुःखं जानीतः। गच्छता कालेन उभाभ्याम् अपि वाणिज्येन प्रभूतं धनं सम्पादितम्। केशवस्य पुत्रः विद्याधरः पदवीधरः जातः। रामकृष्णस्य पुत्री मन्दाकिनी अपि विद्याचतुरा, कलानिपुणा, गृहकर्मकुशला च जाता। केशवः रामकृष्णः च इच्छतः यत् विद्याधर-मन्दाकिन्योः विवाहं निर्वर्त्य मैत्री बन्धुत्वरूपेण परिवर्तनीया इति।

कदाचित् तौ स्वपुत्रौ एतं विचारम् उक्तवन्तौ। एतत् श्रुत्वा मन्दाकिनी नितरां सन्तुष्टा। यतः विद्याधरविषये बहोः कालतः अनुरागः तस्याः मनसि सुप्तः आसीत्। किन्तु प्रस्तावं श्रुत्वा विद्याधरः झटिति उक्तवान् यत् अहं तां न परिणेष्यामि इति। 'मन्दाकिनी सौन्दर्येण मत्समाना न' इति तस्य आशयः आसीत्।

"मन्दाकिनी गुणवती विद्यावती च। असुन्दरी अपि न। तस्याः परिणयेन भवतः हितम् एव सिध्यति। अस्माकम् अपि सन्तोषः भविष्यति" इति पुत्रं बहुधा उक्तवान् केशवः। किन्तु विद्याधरः मन्दाकिनीं परिणेतुं सिद्धः न जातः। "अहं तु परमसुन्दरीं तरुणीं परिणेतुम् इच्छामि। मन्दाकिन्याः तु सामान्यं सौन्दर्यम्। अतः सा मास्तु मम। देशसञ्चारं कृत्वा अहम् एव योग्यां वधूम् अन्विष्यामि" इति पितरम् उक्तवान् विद्याधरः।

"देशसञ्चारं कृत्वा वधूम् अन्वेष्टुं किं भवान् राजकुमारः? मन्दाकिनी योग्या वधूः।



मास्तु भवतोः। विद्याधरस्य अन्तरङ्गं ज्ञातं मया। ऊहालोके सञ्चरन् वास्तविकं प्रपञ्चं विस्मृतवान् अस्ति सः। गुणेन तु सः उत्तमः एव। अतः अहं तेनैव परिणीता भविष्यामि। भवद्भ्यां मम एषः प्रयत्नः अनुमन्तव्यः" इति।

केशवः रामकृष्णः च तस्याः प्रस्तावम् अङ्गीकृतवन्तौ। अनन्तरं मन्दाकिनी पुरुषवेषं धृत्वा विद्याधरेण गतं मार्गम् अनुसरन्ती कस्मिंश्चित् ग्रामे तेन मिलितवती।

अदृष्टपूर्वेण इव व्यवहरन्ती सा विद्याधरस्य नामग्रामादिकं पृष्टवती। व्यवहारसमये सा स्वरम् अपि परिवर्तितवती आसीत् इत्यतः सा का इति न ज्ञातं विद्याधरेण। स्वपरिचयं विस्तरेण निवेद्य विद्याधरः– "परमसुन्दरी एव परिणेतव्या इति मम दृढः सङ्कल्पः। तदर्थम् अहं धनव्ययं समयव्ययं वा न गणयामि। धनिकपुत्रः इव दृश्यमानः भवान् किमर्थम् एतम् अल्पं ग्रामम् आगतवान्?" इति पृष्टवान्।

मन्दाकिनी दीर्घं निःश्वस्य– "भवतः इव ममापि अन्यविधा इच्छा। मम नाम वेणुगोपालः इति। सङ्गीतं मम प्राणः इव। अहं कस्याञ्चित् तरुण्याम् अनुरक्तः आसम्। सा वर्णेन तु नितरां कृष्णा, किन्तु तस्याः कण्ठः कोकिलायाः इव सुमधुरः।

जीवने बाह्यं सौन्दर्यं प्रधानं न। 'भार्या रूपवती शत्रुः' इति ज्येष्ठाः वदन्ति। अतः सुन्दर्याः अन्वेषणं मास्तु" इति पुत्रं बोधितवान् केशवः।

"राजकुमारैः केवलं देशसञ्चारपूर्वकं वध्वाः अन्वेषणं करणीयम् इति नास्ति नियमः। सौन्दर्यप्रज्ञारहिताः अरसिकाः उक्तवन्तः स्युः– 'भार्या रूपवती शत्रुः' इति। अहं तु रूपवतीम् एव परिणेष्यामि" इति उक्त्वा अपेक्षितानि वस्तूनि सज्जीकृत्य गृहात् निर्गतवान् विद्याधरः।

विद्याधरस्य व्यवहारेण केशवः रामकृष्णः च चकितौ। किन्तु मन्दाकिनी अल्पाम् अपि चिन्ताम् अप्राप्नुवती उक्तवती– "चिन्ता

किन्तु दौर्भाग्यवशात् व्याधिकारणतः तस्याः कण्ठस्वरः नष्टः जातः। ततः खिन्नः विरक्तः च अहम् मनःशान्तेः अन्वेषणं कुर्वन् देशसञ्चारे उद्युक्तः अभवम्। प्रशान्त-स्थलानि गच्छन् एतं ग्रामम् अपि आगतः" इति उक्त्वा पुनरपि निःश्वसितवती।

"अहो दैवगतिः चित्रा! भवान् कण्ठस्वरं प्रधानं भावयन् रूपं गौणं भावयति। अहं तु कण्ठस्वरं गौणं भावयामि। मया परिणीयमानायाः सौन्दर्यं रम्भायाः ऊर्वश्याः वा इव स्यात्" इति उक्तवान् विद्याधरः।

"एवं वा? गतवर्षे अहं पित्रा सह तीर्थयात्रार्थं गतवान् आसम्। तदा नगरे कस्याश्चित् वृद्धायाः गृहे आवयोः वसतिः आसीत्। सा वृद्धा तु निर्धना। किन्तु तस्याः पुत्री शिल्पिना निर्मितं शिल्पम् इव परमसुन्दरी! सा हरिणनयना, बिम्बोष्ठी, चम्पकनासिका, सिंहकटिः। भवान् इच्छति चेत् अहं भवन्तं तत्र नेतुं सिद्धः। तां दृष्ट्वा यथोचितं करोतु" इति उक्तवती मन्दाकिनी।

"तर्हि मया त्वरया द्रष्टव्या सा" इति उक्त्वा गमनार्थं सिद्धः जातः विद्याधरः। अनन्तरं तौ नगरस्थायाः वृद्धायाः गृहं प्राप्तवन्तौ। वृद्धा तयोः पादादिक्षालनार्थं जलं दत्तवती, भोजनं चापि परिवेषितवती।

भोजनसमये मन्दाकिनी वृद्धाम् पृष्टवती— "अम्ब! वर्षात् पूर्वम् अहं यदा पित्रा सह अत्र आगतवान् आसं तदा अत्र काचित्



अप्सरस्सदृशी तरुणी आसीत्। इदानीं कुत्र सा? न दृश्यते खलु अत्र?" इति।

तदा सा म्लानवदना वृद्धा— "अत्र चित्रपटे दृश्यते खलु— एषा किल दृष्टा भवता? पूर्वं सा अप्सराः इव आसीत्। किन्तु इदानीं तस्याः सौन्दर्यं कथामात्रम्" इति उक्त्वा दीर्घं निःश्वसितवती।

चित्रपटं निर्निमेषं दृष्टवान् विद्याधरः। चित्रपटस्थायाः सौन्दर्यातिशयं दृष्ट्वा सः क्षणकालम् आश्चर्येण स्तब्धः। अनन्तरं सः वृद्धाम् उद्वेगेन पृष्टवान्— "अम्ब! एषा इदानीं कुत्र गता? इहलोके एव अस्ति खलु?" इति।

वृद्धा किमपि अनुक्त्वा प्रकोष्ठं गत्वा

पुत्रीम् आनीय तयोः पुरतः स्थापितवती। तस्याः पुत्र्याः मुखे तु रोगजनिताः किणाः! नेत्रं श्वेतरोगग्रस्तम्! एतादृशं विरूपं दृष्ट्वा विद्याधरः स्तब्धः!

वृद्धा सकृत् अश्रूणि मार्जयित्वा दुःखमिश्रितेन स्वरेण– "सर्वं ललाट-लिखितम्! विवाहे आसन्ने, विषूचिकारोगस्य कारणतः एषा एवं कुरूपिणी जाता। एतया एव चिन्तया एतस्याः पिता परलोकं गतः। निराश्रया अहं पथिकेभ्यः भोजनं यच्छन्ती कथमपि जीवनं निर्वहामि" इति उक्त्वा अश्रूणि स्रावितवती।

वृद्धायाः वचनं श्रुतवतः, सर्वं प्रत्यक्षं दृष्टवतः विद्याधरस्य महान् आघातः। 'देवकन्या एव परिणीता चेदपि तस्याः सौन्दर्यं चिरकालं तिष्ठेत् इत्यत्र नास्ति निश्चयः। अतः बाह्यं सौन्दर्यम् अशाश्वतम्। एषा वृद्धायाः पुत्री एव अत्र प्रत्यक्षं प्रमाणम्। मन्दाकिनी यद्यपि परमसुन्दरी न, तथापि असुन्दरी अपि न। तस्याः मनः तु नितरां परिष्कृतम्। मल्लिकां विहाय केतक्याः समीपं गच्छतः भ्रमरस्य स्थितिः जाता मम। अहो मूर्खता मम' इत्येवं खेदं पश्चात्तापं च अनुभूतवान् विद्याधरः।

विद्याधरः मन्दाकिनी च भोजनं समाप्य ततः प्रस्थितवन्तौ। मार्गे विद्याधरः– "नदीप्रवाहे मिलिते तृणे इव आवां मिलितवन्तौ, वियोगं प्राप्नुवन्तौ स्वः अपि। वृद्धायाः पुत्र्याः दर्शनतः मयि विवेकः उदितः। गुणसुन्दरी एव परिणेतव्या इति निश्चितवान् अस्मि। सौन्दर्यं क्षणिकम् इति सम्यक् अवगतं मया। भवता अपि भर्वदिष्टा कोकिलकण्ठा प्राप्यतां, भवतः जीवनं सुखमयं भवतु इति आशासे" इति मन्दाकिनीम् उक्त्वा स्वमार्गम् अनुसृतवान्।

मन्दाकिनी अपि गृहं गत्वा पितरं प्रवृत्तं सर्वं निवेदितवती। सर्वं श्रुत्वा रामकृष्णः नितरां सन्तुष्टः। पुनः अल्पे एव काले विद्याधर-मन्दाकिन्योः विवाहः सवैभवं सम्पन्नः।






## अस्मद्देशीया पशुपक्षिसम्पत्—

# गृ ध्र प क्षी

**म**हाकारकेषु पक्षिषु गृध्रः प्रधानः। सप्तत्यङ्गुलदीर्घाभ्यां पक्षाभ्यां, धूम्रेण वर्णेन, गाम्भीर्ययुक्तेन मुखेन च युक्तः एषः मांसाहारी। एतस्य चञ्च्वग्रं तीक्ष्णं दृढतमं च। दृष्टिः च निशिता। सामान्यैः पक्षिभिः यत्र डयनं न शक्यते तादृशे उन्नते आकाशे डयमानः एषः भूमौ स्थितम् आहारं लीलया अन्विष्य बाणः इव लक्ष्यस्य उपरि पतित्वा नयति। गृध्रः उन्नतेषु पर्वतशिखरेषु शिलानां मध्ये नीडं रचयति। आकारेण बलेन व्यवहारेण च विशिष्टः एषः 'पक्षिराजः' इति ख्यातः अस्ति।

गृध्राणां राजा गरुडः। पुराणेषु गृध्रराजस्य गरुडस्य विशिष्टं स्थानम् अस्ति। 'गरुत्मान्' 'विनतासुतः' इत्यादिभिः नामभिः ख्यातः एषः भगवतः विष्णोः वाहनम्। गरुडस्य महत्त्वप्रतिपादकं 'गरुडपुराणं' लोके प्रसिद्धम् अस्ति।

स्वमातुः दास्यविमोचनार्थं गरुडः स्वर्गाधिपतिम् इन्द्रम् अमृतं प्रार्थितवान्। किन्तु इन्द्रः अमृतदानं निराकृतवान्। कुपितः गरुडः युद्धार्थम् उद्युक्तः। युद्धे जयं प्राप्य सः अमृतकलशं गृहीत्वा मातुः समीपम् आगत्य मातरं दास्यविमुक्तं कृतवान्। गरुडस्य धैर्यसाहसादिकं दृष्ट्वा सन्तुष्टानाम् इन्द्रादीनाम् प्रार्थनाम् अङ्गीकृत्य विष्णुः तं स्वबाहनं कृतवान्।

गृध्रकुले जातौ जटायुः सम्पातिः च रामायणे प्रसिद्धौ।

## वार्ताविषयाः बालाः–

# बेबी शामिली



एषु दिनेषु 'किलुकन् पेट्टि' नामकस्य चलनचित्रस्य निमित्तं चित्रीकरणं प्रचलत् आसीत्। यदा निर्देशकः 'एक्शन्' इति उक्तवान् तदा चित्रग्राहकस्य पुरतः पञ्चवर्षीयायाः बालिकायाः नेत्राभ्याम् अश्रुधारा उद्गता। यथा नट्यः अश्रुस्रावणार्थं ग्लिसरिन् उपयोगं कुर्वन्ति तथा न कृतवती आसीत् सा। अश्रुस्रावणं सहजम् आसीत्। निर्देशकः यदा 'कट्' इति उक्तवान् तदा बालिकायाः अश्रुस्रावणं झटिति स्थगितम्। बालिकायाः अभिनयकौशलं दृष्ट्वा तत्रत्याः सर्वे आश्चर्यचकिताः अभवन्।

सा बालिका न अन्या, अपि तु बेबी शामिली एव, यया च 'अञ्जलि'नामके तमिळुचित्रे कृतस्य अभिनयस्य निमित्तम् 'उत्तमबालनटी'प्रशस्तिः प्राप्ता। बालनटेषु आयकरदात्री एषा एका एव। एकस्य चित्रस्य निमित्तम् एषा लक्षं रूप्यकाणि स्वीकरोति। इदानीम् मलयालम्, तमिळु, तेलुगु इत्यादिषु भाषासु अभिनयं कुर्वती अस्ति एषा।

पञ्चवर्षीया एषा युगपत् एव बहुषु चित्रेषु अभिनयं कथं करोति? तस्याः पिता ए.एस्. बाबु निर्देशकतः पूर्वम् एव कथास्वरूपं सम्भाषणविवरणं च ज्ञात्वा आगच्छति। अनन्तरं कथासन्दर्भानुगुणं कुत्र कथं स्थातव्यम्, कथं भावाः अभिव्यञ्जनीयाः, कथं हस्तपादादिकं चालनीयम्, कथं वाक्यम् उच्चारणीयम् इत्यादीन् विषयान् पुत्रीं सम्यक् बोधयति। एतदनुगुणम् अभ्यस्य शामिली अनन्तरदिने चित्रग्राहकस्य पुरतः निर्देशकस्य आशयानुगुणं सम्यक् अभिनयं करोति।

एतस्याः पिता चित्रीकरणसमये सर्वत्र अपि स्वयम् उपस्थितः सन् एतस्याः सर्वविधसाहाय्यं करोति। तां तदा तदा विहारार्थम् उद्यानं नीत्वा तोषयति सः। चाकलेहादीनि प्रियखाद्यानि तस्यै क्रीत्वा दत्त्वा तां हसन्मुखीं करोति अपि।

शामिली मासे विंशतिं दिनानि प्रायः चित्रीकरणे भागं गृह्णाति। अवशिष्टेषु दिनेषु विद्यालयं गच्छति। ''प्रतिदिनं विद्यालयं गन्तुम् इच्छा मम'' इति अग्रजं सरोदनं वदति सा। अग्रजया शालिन्या सह क्रीडने एतस्याः विशेषाभिरुचिः। शालिनी च भूतपूर्वा बालनटी।

जन्मतः द्वितीये वर्षे एव एतया चित्रेषु अभिनयः कृतः। 'इतः परम् अपि पञ्चषाणि वर्षाणि मम पुत्री चित्रेषु अभिनयं करोतु' इति स्वाशयं प्रकटयति एतस्याः पिता।

# भवन्तः जानन्ति वा?

१. 'स्वर्गमन्दिरम्' इति ख्यातं मन्दिरं कुत्र अस्ति?
२. अतिप्राचीनः प्राणिसङ्ग्रहालयः कुत्र अस्ति?
३. १४५२ तमे वर्षे जातः इटलीदेशीयः कश्चन सङ्गीतविद्वान् गणितज्ञः, तत्त्वशास्त्रज्ञश्च सन् ख्यातिं प्राप्तवान्। सः कः?
४. प्रथमः 'पदबन्धः' कदा प्रकाशितः?
५. सा बालिका का, यस्याः पत्रं प्राप्य अब्राहिं लिङ्कन्वर्यः श्मश्रुधारणं कृतवान् इति श्रूयते?
६. अग्रिमा ओलम्पिकक्रीडास्पर्धाः स्पेनदेशे जुलैमासे प्रवर्तिष्यते। एवं तर्हि सर्वप्रथमम् 'ओलम्पियाड्' कुत्र आयोजितः आसीत्?
७. 'कराटे' पदस्य कः अर्थः?
८. ग्रीकयात्रिकः मेगास्तनीस् भारतीयस्य कस्य राज्ञः आस्थानं गतवान् आसीत्?
९. गान्धिवर्यः कं स्वस्य राजकीयगुरुं मन्यते स्म?
१०. जूलियस्सीसर्नाम्ना जुलैमासः ख्यातिं गतः। तस्य भागिनेयस्य नाम्ना कः मासः ख्यातः?
११. अकबरराजस्य वित्तमन्त्री कः आसीत्?
१२. रघुवंशकाव्यं केन कविना विरचितम्?
१३. विनायकस्य वाहनं मूषकः इति प्रसिद्धः अस्ति। अस्मद्देशे कस्मिंश्चित् मन्दिरे मूषकेभ्यः भक्त्या आहारः समर्प्यते। तच्च मन्दिरं कुत्र अस्ति?
१४. नेपोलियन्वर्यः सर्वप्रथमं देशात् निष्कासितः कं द्वीपं प्रति प्रेषितः?
१५. स च देशः कः, यस्य च ध्वजे गरुडः सर्पश्च स्तः?

## उत्तराणि

१. चीनादेशे बीजिङ्गनगरे।
२. आस्ट्रियादेशे वियन्नानगरे। १७५२ तमे वर्षे एषः स्थापितः।
३. लियोनार्डो डा विञ्ची।
४. 'न्युयार्क वर्ल्ड्'पत्रिकायां १९१३ तमे वर्षे डिसेम्बर् २१ तमे दिनाङ्के। आर्थर् विन् एतस्य निर्माता।
५. ग्रेस् बेडल्।
६. ग्रीसदेशे ओलिम्पियानगरे क्रि.पू. ७७६ तमे वर्षे। आधुनिकयः ओलम्पिकक्रीडाः तु ग्रीसदेशीये एथेन्सनगरे १८९६ तमे वर्षे आरब्धाः।
७. रिक्तः हस्तः इति
८. चन्द्रगुप्तमौर्यस्य।
९. गोपालकृष्णगोखलेवर्यम्।
१०. अगस्ट्। अगस्टस् सीसर् इति तस्य नाम।
११. तोडरमल्।
१२. कालिदासेन।
१३. राजस्थाने। कर्णिमातालये।
१४. एल्बाद्वीपं प्रति।
१५. मेक्सिको।




## अतिसुदीर्घं पत्रम्

बान्धवेभ्यः मित्रेभ्यः वा दीर्घस्य पत्रस्य लेखनं केषाञ्चित् प्रवृत्तिः। किन्तु नेपालीयेन विंशतिवर्षीयेण राजेन्द्रचन्दठाकूरिवर्येण यावद्दीर्घं लिखितं तावद्दीर्घं पत्रम् अन्येन न लिखितं स्यात्। सः भारतीयाय स्वमित्राय १०,३१५ पुटात्मकम् अखण्डम् एकं पत्रं लिखितवान्। एतस्य पत्रस्य भारः ४२ किलो स्यात्। यदि एतस्य पत्रस्य पुटाः अधोधः संश्लेष्येरन् तर्हि दैर्घ्यं मैलद्वयं भवेत्! तेन भारतीयेन तत् पत्रं वर्षारम्भे प्राप्तम्। प्रायः सः तत् पत्रं फेब्रवरीमासान्तं यावत् पठितवान् स्यात्।

# र स वा र्ताः

## प्राणरक्षणार्थं प्रयासः

आस्ट्रेलियादेशस्य वायव्यभागे निर्जने कस्मिंश्चित् नदीतीरे पशुचारणोद्युक्ताः केचन जनवरीमासे १६ दिनाङ्के अदृष्टपूर्वान् चीनादेशीयान् ३५ जनान् दृष्ट्वा आश्चर्यचकिताः अभवन्। तैः स्वस्य इतिवृत्तम् एवम् उक्तम्– "वयं समुद्रप्रयाणरताः नौकाभङ्गतः जले पतिताः कथम् अपि तीरं प्राप्य २०० कि.मी. क्रमणं कृत्वा अत्र आगताः" इति। सुदीर्घकालं यावत् तैः कथं प्राणाः रक्षिताः? ते प्रथमम् एकं मकरं मारयित्वा तदीयं मांसं खादित्वा अवशिष्टम् आत्मना सह नीत्वा खादितवन्तः। ततः प्रयाणसमये प्राप्तान् सर्पान् मीनान् च खादितवन्तः। क्वचित् नकुलाः अपि तैः खादिताः। एवं सर्वविधान् सरीसृपान् खादन्तः छायायां शयानाः कथमपि तावद्दूरं क्रमणं कृतवन्तः।





# अङ्गीकरणीयं वचनम्

राज्ञः विक्रमसेनस्य मन्त्री चतुरसेनः। राजकार्येषु मन्त्रिणः मार्गदर्शनं प्राप्य एव व्यवहरति स्म राजा। चिन्तनं निर्दुष्टं परिपूर्णं च स्यात् इत्यतः तेन दश उपमन्त्रिणः अपि नियोजिताः आसन्। उपमन्त्रिभिः सह समालोच्य मन्त्री चतुरसेनः राजानं निवेदयति स्म। राजा तदनुगुणम् अङ्गीकारं प्रदर्श्य नियमादिकं व्यवहारे आनयति स्म।

दशसु उपमन्त्रिषु शचीन्द्रः अपि अन्यतमः। तस्य बुद्धिः किञ्चित् वक्रा। सर्वैः अङ्गीकृतम् एषः निराकरोति स्म। अन्यैः निराकृतं पुरस्करोति स्म। बुद्धिः किञ्चिदिव वक्रा चेदपि तीक्ष्णमतित्वम् अस्तीत्यतः मन्त्रिमण्डले तस्मै स्थानं दत्तम् आसीत् मन्त्रिणा चतुरसेनेन। किन्तु अन्ये उपमन्त्रिणः शचीन्द्रस्य व्यवहारं दृष्ट्वा खिन्नाः भवन्ति स्म।

अन्यान् मन्त्रिणः तिरस्कारेण पश्यन् शचीन्द्रः वदति स्म– "मया यत् उक्तं तत् बुद्ध्या निराकुर्वन्तः देशस्य अहितम् एव चिन्तयन्ति। देशस्य प्रगतौ विघ्नायन्ते भवन्तः" इति।

'मया यत् उच्यते तत् कोऽपि न अङ्गीकरोति' इति शचीन्द्रस्य महान् खेदः। कदाचित् सः राजानं दृष्ट्वा– "मम वचनस्य महत्त्वं महामन्त्री चतुरसेनः अपि ज्ञातुं न शक्नोति इति तु महते खेदाय" इति उक्तवान्।

तदा राजा उक्तवान्– "महामन्त्री विचिन्त्य निर्णयति इति विश्वासः अस्ति मम। अधिकसङ्ख्याकैः मन्त्रिभिः यत् पुरस्क्रियते तत् अङ्गीकरोति सः। भवता प्रकटितः आशयः अधिकसङ्ख्याकैः न पुरस्कृतः चेत् दोषः भवति एव अस्ति इति



अर्थः। आत्मावलोकनं कृत्वा स्वचिन्तनदोषं परिष्करोतु" इति।

अनन्तरं राजा सर्वान् मन्त्रिणः मेलयित्वा शचीन्द्रेण यत् कृतं तत् निवेद्य उक्तवान्– "भवत्सु अपि कदाचित् भावना भवेत्– मम आशयम् अन्यः कोऽपि न अङ्गीकरोति इति। तादृशे सन्दर्भे आत्मावलोकनं कृत्वा स्वयं परिष्कारः प्राप्तव्यः। अधिकसङ्ख्याकैः अङ्गीकृतः विषयः अस्माभिः अपि अङ्गीकरणीयः" इति

राज्ञः निर्गमनस्य अनन्तरम् अन्ये उपमन्त्रिणः शचीन्द्रं दृष्ट्वा कोपेन उक्तवन्तः– "भोः, भवत्कारणतः अस्माभिः अपि उपदेशवचनं श्रोतव्यम् आपतितम्। 'एकः पापानि कुरुते, फलं भुङ्क्ते महाजनः।' अतः इतः परं वा बहुसङ्ख्याकैः अङ्गीकृतम् आशयं भवान् अपि अङ्गीकरोतु। सर्वजनविरुद्धम् आशयं मा प्रकटयतु" इति।

तदा शचीन्द्रः अपि कोपेन– "भवन्तः मां समूहात् पृथक्कुर्वन्तः सन्ति। अस्तु तावत्। अद्य मम आशयः राज्ञा खण्डितः स्यात्। किन्तु राजा अपि मम आशयं यथा अङ्गीकुर्यात् तथा करिष्यामि" इति उक्तवान्।

एतदनन्तरं कदाचित् राजा विक्रमसेनः मृगयार्थं गत्वा आगतवान्। तदा शचीन्द्रः अन्यान् मन्त्रिणः उक्तवान्– "अस्माकं महाराजेन मृगयायाम् अपूर्वशौर्यसाहसादयः प्रदर्शिताः। अतः वयं सम्भूय गत्वा राजानम् अभिनन्दाम" इति।

"मृगयागमनं कश्चन सामान्यः विषयः। यदि राज्ञा युद्धे विजयः प्राप्तः स्यात्, महाकाव्यं किमपि लिखितं स्यात्, महान् सन्तोषः कोऽपि प्राप्तः स्यात् तर्हि अभिनन्दनं कृतं चेत् शोभा। सामान्ये सन्दर्भे अभिनन्दनं न शोभते" इति उक्तवन्तः अन्ये मन्त्रिणः।

किन्तु मन्त्री चतुरसेनः शचीन्द्रस्य प्रस्तावम् अङ्गीकुर्वन्– "भवतु नाम। वयं सर्वे सम्भूय गत्वा अभिनन्दनवचनानि वदाम" इति उक्त्वा तदर्थं व्यवस्थां कर्तुं शचीन्द्रम् एव नियोजितवान्।

एतेन सन्तुष्टः शचीन्द्रः विजयगर्वेण हसन्

अन्यान् मन्त्रिणः उपहासपूर्वकं पश्यन् ततः निर्गतवान्।

एतया घटनया सर्वे मन्त्रिणः मुखभङ्गं प्राप्य म्लानमुखाः सन्तः मौनं स्थितवन्तः। तदा तान् उक्तवान् चतुरसेनः– "मृगयां समाप्य प्रत्यागतवतः राज्ञः अभिनन्दने महत् औचित्यं किमपि न दृष्टं मया। तथापि शचीन्द्रस्य सन्तोषार्थं मया स च प्रस्तावः अङ्गीकृतः। वयं यदा अभिनन्दनवचनानि वदामः तदा राजा अस्मान् खेदयितुम् अनिच्छन् तत् सन्तोषेण एव स्वीकरिष्यति। अतः शचीन्द्रस्य वचनस्य अनुगुणं व्यवहारेण महत् किमपि न साध्यते चेदपि हानिः तु काऽपि नास्ति। एतत् सर्वं मनसि निधाय एव मया अङ्गीकारः प्रदर्शितः" इति।

एतत् वचनं अन्येभ्यः मन्त्रिभ्यः न अरोचत। अतः ते उक्तवन्तः– "एवं तर्हि शचीन्द्रस्य असन्तोषम् अनिच्छता भवता एवं कृतम्। एतादृशस्य तोषणार्थं अस्माभिः सदा किम् एवं व्यवहरणीयम्? सर्वत्रापि विरोधाभिप्रायं प्रकटयन्तं शचीन्द्रं मन्त्रिमण्डलतः अपसारयाम चेत् का हानिः?" इति।

चतुरसेनः क्षणकालम् आलोच्य पुनः उक्तवान्– "शचीन्द्रः सर्वत्रापि विरोधाभिप्रायं प्रकटयति इति तु सत्यम् एव। किन्तु मम आशयः यत् समूहचिन्तनसन्दर्भे एतादृशाः अपि भवेयुः इति। शचीन्द्रः तीक्ष्णमतिः इत्यत्र नास्ति सन्देहः। चिन्तनसन्दर्भे सः विषयस्य अन्यानि मुखानि अपि उपस्थापयति। तदा तु समग्रचिन्तनं प्रचलति। एवं शचीन्द्रस्य स्थित्या अस्माकं लाभः एव। एतत्सन्दर्भे अङ्गीकारेण अपि हानिः नास्ति इत्यतः मया शचीन्द्रस्य प्रस्तावः अङ्गीकृतः। शचीन्द्रेण विरोधे उपस्थापिते अपि वयं सङ्ख्याबलतः जेतुं शक्नुमः एव। सर्वदा तिरस्कारः मास्तु इति एतत्सन्दर्भे मया अङ्गीकारः प्रदर्शितः" इति।

चतुरसेनस्य वचनं युक्तियुक्तम् अस्ति इति जानन्तः सर्वे मन्त्रिणः तृप्तिं प्राप्तवन्तः।





# उदरनिमित्तम्

कदाचित् कार्यार्थं नगरं गतः सूर्यशेखरः, सुपरिचिते मार्गे नूतनतया आरब्धम् एकं छत्रापणं दृष्टवान्। आश्चर्येण सः समीपं गत्वा आपणस्य स्वामी कः इति दृष्टवान्। आश्चर्यं नाम स्वामिस्थाने उपविष्टः सुपरिचितः वीरभद्रः एव!

'एतेन कदा एतत् वाणिज्यम् आरब्धम्? मया एषा वार्ता इतः पूर्वं न ज्ञाता एव' इति चिन्तयन् सूर्यशेखरः अनतिदूरे एव स्थित्वा वीरभद्रस्य व्यवहारं परिशीलितवान्।

तावता कश्चन कृशकायः छत्रं क्रेतुम् आपणम् आगतवान्। तस्मै छत्रं प्रदर्शयन् उक्तवान् वीरभद्रः– "भवान् कृशः खलु? अतः एतत् अल्पभारयुतं छत्रं स्वीकरोतु। एतत् छत्रं स्वीकृत्य योजनदूरं गतं चेदपि भारः न ज्ञायेत भवता। भवदर्थम् एव कारितम् इव अस्ति एतत्" इति।

सः कृशकायः छत्रं प्रसार्य दृष्ट्वा तृप्त्या धनं दत्त्वा छत्रं स्वीकृत्य ततः निर्गतवान्।

अनन्तरं कश्चन स्थूलः छत्रं क्रेतुम् आगतः। वीरभद्रः तस्मै अपि एकं छत्रं प्रदर्शयन् उक्तवान्– "छत्रं सदापि आकारानुगुणं भवेत्। स्थूलस्य हस्ते सुदृढं छत्रम् एव शोभते। एतत् स्वीकरोतु भवान्" इति।

सः स्थूलः पुरुषः छत्रं प्रसार्य परिशीलयन् आसीत्। तदा पुनः उक्तवान् वीरभद्रः– "किं परीक्षणेन? किं छत्रं कस्य हस्ते शोभते इति वयं जानीमः। अतः आगतस्य आकारं दृष्ट्वा योग्यम् एव चित्वा प्रदर्शयामः। स्थूलस्य भवतः हस्ते भारयुक्तम् एतत् छत्रं शोभते एव। आतपे वृष्टौ झञ्झावाते चापि एतत् उपकरोति। असदृशम् एतत्" इति।

एतानि वचनानि श्रुत्वा सः स्थूलः तृप्तः

सन् धनं दत्त्वा छत्रं स्वीकृत्य ततः निर्गतवान्।

एतत्सर्वं दूरतः पश्यन् स्थितः सूर्यशेखरः वीरभद्रस्य समीपम् आगतवान्। वीरभद्रः तं दृष्ट्वा सन्तोषेण– "मित्र! कुशलं खलु? उपविशतु तावत्" इति आदरेण उक्तवान्।

तदा सूर्यशेखरः– "भवान् मधुरैः वचनैः व्यवहरन् स्थूलाय कृशाय च एकैकं छत्रं दत्तवान्। तौ तृप्त्या तत् क्रीत्वा गतवन्तौ। अहं तु न स्थूलः, न वा कृशः। मदुचितं छत्रं दातुम् अर्हति वा भवान्?" इति पृष्टवान्।

"कुतः न? छत्रविक्रयणम् एव मम वृत्तिः। सर्वविधजनेभ्यः अपि योग्यं छत्रं दातुं शक्नोमि एव। ग्राहकाणां तृप्तिः एव अस्मादृशानां लक्ष्यम्। एतत् पश्यतु। दर्शनमात्रेण एव एतत् भवते रोचते" इति उक्त्वा एकं छत्रं सूर्यशेखराय दत्तवान्।

सूर्यशेखरः तत् छत्रं गृहीत्वा इतस्ततः परिवर्तयन्– "एतत् तावत् उत्तमम् इति न भाति" इति उक्तवान्।

"तथा किमर्थं वदति भोः? एतत् छत्रं हस्तेन गृहीतं चेत् भवान् आढ्यः इव, भूस्वामी इव दृश्यते। छत्रधारणेन भवतः मुखे अन्या एव शोभा भविष्यति। छत्रं गृहीत्वा अश्वारोहणं कृतं चेत् भवान् साक्षात् महाराजः इव भासते। एतत्सर्वम् अजानन् भवान् एतत् समीचीनं नास्ति इति वदति। अस्तु तावत्, वृष्टिकाले उपयोगार्थं तु एतत् भवत्येव इति तु सुस्पष्टम्। तदर्थं वा क्रीणातु" इति उक्तवान् वीरभद्रः।

"वर्णमयानि वचनानि भवतः" इति वदन्



छत्रं प्रसार्य परिशीलयन् स्थितवान् सूर्यशेखरः।

तदा झटिति वीरभद्रः पदद्वयं पृष्ठतः गत्वा– "मम वचनं सत्यम् एव श्रीमन्! अहो गाम्भीर्यम्! अहो शोभा! नमस्करोमि श्रीमन्! अद्य सुदिनं मम" इति विनयेन उक्तवान्।

तदा सूर्यशेखरः आश्चर्यं प्रकटयन्– "किं भोः, एतावान् विनयः आदरः च किमर्थम्? किं क्षणमात्रेण नटः संवृत्तः वा भवान्?" इति पृष्टवान्।

"न तथा। यदा एतत् छत्रं भवतः हस्ते भवति तदा कोऽपि धाष्टर्यम् अविनयं वा प्रदर्शयितुं न अर्हति। तादृशी शोभा दृश्यते भवतः मुखे। सर्वं छत्रधारणस्य फलम्" इति उक्तवान् वीरभद्रः।

सूर्यशेखरः वीरभद्रस्य चातुर्यपूर्णं वचनं श्रुत्वा सन्तोषं प्रकटयन् धनं दत्त्वा छत्रं स्वीकृत्य– "वीरभद्र! आत्मीयौ खलु आवाम्। अतः पृच्छामि– कृशाय स्थूलाय मध्यमाय मादृशाय च दातुं योग्यानि छत्राणि सन्ति वा भवत्समीपे? सत्यं वदतु" इति उक्तवान्।

तदा वीरभद्रः हसन्– "मित्र! किं गोपनेन? मम समीपे विद्यमानानि छत्राणि सर्वाणि अपि समानानि एव। किन्तु आकारं दृष्ट्वा भेदं प्रकल्प्य अहं तथा वदामि। एवं न कृतं चेत् वाणिज्यं न प्रचलेत्। उदरनिमित्तं बहुकृतवेषः लोकः" इति उक्तवान्।

"अहम् अपि सन्तोषेण एकं छत्रं यथा क्रीणीयाम् एव तथा कौशलेन व्यवहृतवान् भवान्। एतत् कौशलं कथं सम्पादितं भवता?" इति पृष्टवान् सूर्यशेखरः।

"बाल्ये नाटकेषु अभिनीयते स्म खलु? तत् इदानीम् उपकरोति। अन्यच्च जीवनं सर्वविधं कौशलम् अपि पाठयति। जले पतितः तरणम् अभ्यस्यति एव" इति उक्तवान् वीरभद्रः।

'मम मित्रं वीरभद्रः अचिरात् एव वाणिज्ये प्रगतिं साधयिष्यति' इति चिन्तयन् ततः स्वग्रामं प्रति प्रस्थितवान् सूर्यशेखरः।





# अविवेकिता

लम्बोदरः नाम कश्चन देवभक्तः पूर्वम् आसीत्। प्रतिदिनं प्रातः उत्थाय स्नात्वा देवपूजां कृत्वा एव सः अन्यकार्यं करोति। तीर्थसेवनात् पूर्वं जलबिन्दुम् अपि न सेवते सः। रात्रौ देवं नमस्कृत्य एव तस्य शयनम्।

कदाचित् रात्रौ निद्रायां देवः तस्य स्वप्ने प्रादुर्भूय उक्तवान्– "भक्ताग्रेसर! भवतः भक्त्या तुष्टः अस्मि। अपेक्षितं वरं प्रार्थयतु" इति।

तदा लम्बोदरः सन्तोषेण– "भगवन्! मम गृहस्य पुरतः दामोदरः नाम कश्चन नास्तिकः निवसति। सः आस्तिकः यथा स्यात् तथा करणीयम्। मम गृहस्य पुरतः एव नास्तिकस्य स्थितिं न सहे अहम्" इति उक्तवान्।

"अस्तु। तस्य मनसः परिवर्तनार्थं भवान् एव प्रयत्नं करोतु। भवान् यत् वदति तत् यथा सम्भवेत् तथा शक्तिं ददामि भवते। तं भक्तरूपेण परिवर्तयतु" इति उक्त्वा देवः अदृश्यः अभवत्।

स्वप्नदर्शनतः सन्तुष्टः लम्बोदरः प्रातः उत्थाय दामोदरस्य गृहं गत्वा– "भोः, देवः मम स्वप्ने प्रत्यक्षः भूत्वा माम् उक्तवान् यत् भवन्तं विवेकः बोधनीयः इति। अद्य आरभ्य भवता देवपूजा करणीया। देवे यदि श्रद्धा न प्रदर्श्यते तर्हि भवतः गृहस्य नारिकेलवृक्षः भस्मीभविष्यति" इति उक्तवान्।

"वृथा दम्भवचनं भवतः। देवे कदापि विश्वासं न करोमि अहम्" इति उक्तवान् दामोदरः।

तावता गृहस्य अन्तर्भागतः धावन्ती आगता दामोदरपत्नी– "हा हन्त! गृहस्य पृष्ठतः स्थितः नारिकेलवृक्षः दग्धः अभवत्" इति रुदती पतिम् उक्तवती।

'मम एव जयः' इति भावं प्रदर्शयन्

लम्बोदरः गर्वेण हसितवान्।

दामोदरः तत्क्षणे एव ग्रामसीमायां स्थितस्य तिन्त्रिणीवृक्षस्य समीपं गत्वा– "अये पिशाचवर्य! भवतः सामर्थ्यं बहुधा श्रुतं मया। अद्य भवता मम कश्चन उपकारः करणीयः" इति उक्त्वा प्रवृत्तं समग्रं निवेदितवान्।

"एवं वा? मम प्रियं कार्यम् उक्तं भवता। तस्य गृहं पातयिष्यामि इदानीम्। भवान् गत्वा पश्यतु" इति अवदत् पिशाचः।

गृहस्य पतनतः कुपितः अभवत् लम्बोदरः। सः अपि कोपेन दामोदरस्य गृहं मन्त्रबलेन पातितवान्। प्रतीकारसाधनार्थं दामोदरः लम्बोदरस्य क्षेत्रं नाशितवान्। लम्बोदरः अपि दामोदरस्य क्षेत्रं नाशितवान्। एवं मध्याह्नाभ्यन्तरे उभयोः अपि सर्वस्वनाशः अभवत्।

पत्नीपुत्राणां रोदनतः उभाभ्याम् अपि आत्मना कृतः अविवेकः ज्ञातः। लम्बोदरः दामोदरम् उक्तवान्– "भवता प्रतीकारसाधनार्थं दुष्टस्य पिशाचस्य साहाय्यं प्रार्थितम्। ततः सर्वनाशः सम्पन्नः। सर्वं भवतः अविवेकस्य फलम्" इति।

"प्रथमं तु भवता अविवेकिता प्रदर्शिता। प्रतिक्रियारूपेण मया भवतः अहितं कृतम्। एवं सर्वस्य मूलं भवान् एव" इति उक्तवान् दामोदरः।

"सत्यम् उक्तं भवता। कस्यापि अपकारम् अकुर्वन् नास्तिकः भवान् मम गृहस्य पुरतः तिष्ठति चेत् मम काऽपि हानिः न आसीत्। मया भक्त्युन्मादेन भवतः अहितम् आदौ चिन्तितम्। तेन उभयोः अपि सर्वस्वनाशः जातः" इति खेदेन उक्तवान् लम्बोदरः।

रात्रौ पश्चात्तापेन देवं स्मृतवान् सः। यदा स्वप्ने देवः प्रत्यक्षः जातः तदा सः क्षमां प्रार्थितवान्। देवः लम्बोदराय दामोदराय च पूर्वतनं गृहक्षेत्रादिकं दत्तवान्। दुष्टं पिशाचं निगृहीतवान् च।

एतदनन्तरं लम्बोदर-दामोदरौ परस्परं प्रीत्या व्यवहरन्तौ सुखेन जीवितवन्तौ।






रावणः सीतायाः वञ्चनार्थम् उपायं सूचयित्वा तां द्रष्टुम् अशोकवनं गतवान्। तत्र घोराणां राक्षसीनां मध्ये उपविश्य शिरः अवनमय्य अश्रूणि स्रावयन्ती, रामम् एव ध्यायन्ती सीता दृष्टा तेन। सीतायाः नेत्रयोः पुरतः रामस्य एव मूर्तिः। शिरसि, हृदये, मनसि, बुद्धौ, वचने, नेत्रयोः पुरतः, सर्वत्र रामः एव।

रावणः अपूर्वां वार्तां श्रावयन् इव महता उत्साहेन सीताम् उद्दिश्य उक्तवान्— ''सर्वदा रामानाम जपति स्म खलु भवती? सः रामः इदानीं नाममात्रेण अस्ति। अद्य युद्धे तस्य संहारः जातः। इतः परं भवती मां परिणयति चेत् न कोऽपि विघ्नः। भवतीं पट्टमहिषीं करिष्यामि। रामः कथं मृतः इति ज्ञातव्यम् इति भवत्याः कुतूहलं स्यात् खलु? शृणोतु, तावत्— रामः महत्या वानरसेनया सह समागत्य लङ्कासमीपे स्थितवान्। रामपक्षीयाः सर्वे श्रान्त्या निद्रावशङ्गताः आसन्। तदा अस्माकं सेनापतिः प्रहस्तः सेनया सह गत्वा वानरसेनां समूलं नाशितवान्। रामस्य शिरसः च्छेदनम् अपि तेनैव कृतम्। ततः पलायनार्थम् उद्युक्तं विभीषणं राक्षसाः गृहीतवन्तः। सुग्रीवः लक्ष्मणः च कथमपि सजीवं पलायितवन्तौ। हनूमान्, जाम्बवान् इत्यादयः वानराः शिरच्छेदं प्राप्य रणाङ्गणे पतिताः। मृतानां वानराणां शवानां राशिः दृश्यते रणाङ्गणे। यदि इच्छा तर्हि भवती एव मया सह आगत्य सर्वं प्रत्यक्षं पश्यतु। ततः पूर्वम् अन्यदपि

२२. वानरसेनायाः लङ्काप्रवेशः।



द्रष्टव्यम् अस्ति भवत्या'' इति।

अनन्तरं समीपस्थां काञ्चित् राक्षसीम् आहूय उक्तवान् सः– ''रामस्य मुण्डम् आनीतवन्तं विद्युज्जिह्वम् आह्वयतु तावत्'' इति।

विद्युज्जिह्वः रामस्य मुण्डं धनुः च आनीय रावणस्य पुरतः संस्थाप्य नमस्कृत्य विनयेन स्थितवान्।

''विद्युज्जिह्व! तत् मुण्डं सीतायाः पुरतः स्थापयतु। एषा मन्दभाग्या स्वपत्युः दुर्गतिं प्रत्यक्षं पश्यतु तावत्'' इति आदिष्टवान् रावणः।

विद्युज्जिह्वः रामस्य मुण्डं सीतायाः पुरतः स्थापयित्वा पार्श्वे मौनं स्थितवान्। रावणः विद्युज्जिह्वस्य हस्ते स्थितं धनुः स्वीकृत्य– ''निद्रां कृतवतः रामस्य शिरः च्छित्वा तदीयेन धनुषा सह प्रहस्तः मत्समीपम् आगतः। एतत् धनुः धृतवन्तं मां भवती रामं परिगणयतु। सुखेन कालं यापयतु। मम आश्रयणं विना भवत्याः नान्या गतिः'' इति उक्तवान्।

सीता स्वस्य पुरतः स्थितं मुण्डं परीक्षादृष्ट्या दृष्टवती। एकैकम् अपि अङ्गं पश्यन्ती अश्रूणि स्रावयन्ती, दौर्भाग्यं निन्दितवती। उच्चैः रोदनं कुर्वती मूर्च्छां गतवती। अल्पे काले पुनः चेतनं प्राप्य रामस्य गुणान् वर्णयन्ती अश्रूणि स्रावितवती।

लक्ष्मणद्वारा वार्तां श्रुत्वा कौसल्या हृदयस्तम्भनं प्राप्य दिवं गता इति चित्रं सीतायाः मनसि आगतम्। समग्रस्य रघुवंशस्य नाशः जातः इत्यपि भावना आगता। 'दौर्भाग्यवतीं मां पापिनीं परिणयता रामेण अनुचितं कृतम्' इति वदन्ती सा सकरुणं रोदनं कृतवती।

अन्ते सा रावणम् उद्दिश्य– ''अये! परस्त्रीहरणचतुर! मां रामस्य शरीरस्य समीपं नयतु। रामस्य चितां प्रविशन्ती अहम् आत्मनः धन्यतां सम्पादयिष्यामि। जीवने एकं वा पुण्यकार्यं करोतु कृपया'' इति उक्त्वा सगद्गदं रुदती पुनः मूर्च्छां गता।

सीतायाः वचनानि विलपनं च पश्यन् रावणः मौनं स्थितवान् आसीत्। तावता

कश्चन राक्षसः आगत्य तं निवेदितवान् यत् मन्त्रिभिः समेतः प्रहस्तः आगतः अस्ति इति। रावणः मन्त्रिणां दर्शनार्थं ततः निर्गतवान्। यदा रावणः अशोकवनतः बहिः पदं स्थापितवान् तदा सीतासमीपे स्थितं रामस्य मायाशिरः अदृश्यतां गतम्। धनुः अपि अदृश्यम् अभवत्।

अत्रान्तरे विभीषणस्य पत्नी सरमा सीतायाः समीपम् आगतवती। सा पत्यनुरूपा सद्गुणसम्पन्ना इत्यतः सीतायां नितरां स्निह्यति। सा सीतायाः पार्श्वे उपविश्य सान्त्वनवचनानि उक्तवती– "प्रियसखि! रावणस्य भीतिम् अपि अविगणय्य निलीय स्थित्वा रावणेन यद्यत् उक्तं तत्सर्वं श्रुतवती अस्मि। भवत्याः वचनानि अपि श्रुतवती अस्मि। राममुण्डदर्शनं माया इति एतावता भवत्या अवगतम् एव खलु? शृणोतु तत्र भेरीध्वनयः श्रूयन्ते। युद्धसन्नाहार्थं रावणः आज्ञां कृतवान् अस्ति। किन्तु युद्धे जयः धर्मपक्षीयस्य रामस्य एव भविष्यति। रामः रावणं संहृत्य अत्र आगत्य भवतीं शोकसागरात् उन्नेष्यति। सर्वं मङ्गलमयं भविष्यति" इति।

सरमायाः वचनानि श्रुतवत्याः सीतायाः दुःखस्य आवेगः किञ्चिदिव शान्तः। सरमा पुनरपि सीताम् उक्तवती– "अहम् इदानीम् आकाशमार्गेण गत्वा भवत्याः क्षेमवार्तां रामं निवेद्य आगमिष्यामि। तेन रामस्य उत्साहः



दशगुणितं प्रवर्धेत। गरुडस्य वेगम् अपि अतिरिच्य आकाशमार्गेण गन्तुं समर्था अहम्" इति।

"भवती आकाशमार्गेण गच्छेत्। जलस्य अन्तः अपि गच्छेत्। अस्तु नाम। यदि मम साहाय्यं करणीयम् इति भवत्याः इच्छा तर्हि इतः गत्वा रावणः किं कुर्वन् अस्ति इति ज्ञात्वा आगच्छतु। कुटिलमतिनः रावणात् नितरां भीता अस्मि अहम्। रावणस्य अग्रिमयोजना ज्ञाता चेत् प्रत्युपायचिन्तनार्थं मार्गः चिन्तयितुं शक्यः" इति सरमाम् उक्तवती सीता।

सरमा आञ्चलेन सीतायाः अश्रूणि मार्जयित्वा ततः निर्गत्य मन्त्रिभिः सह उपविश्य समालोचनं कुर्वतः रावणस्य समीपं



गत्वा सर्वं ज्ञात्वा प्रत्यागतवती।

"भद्रे, अलं भयेन। इतः गतस्य रावणस्य समीपं तदीया वृद्धा माता अविद्धः नाम मन्त्री च आगतवन्तौ। तौ बहुभिः प्रकारैः रावणं हितम् उपदिष्टवन्तौ। यदि हितवचनम् उपेक्ष्येत तर्हि मरणम् एव शरणं स्यात् इत्यपि उक्तवन्तौ तौ। किन्तु रावणः तयोः हितवचनं निराकृतवान्। 'यावत् जीवामि तावत् सीतां न परित्यजामि' इति वदति सः। प्रहस्तप्रभृतयः मन्त्रिणः रावणस्य आशयं पुरस्कुर्वन्तः सन्ति। अतः रावणः कस्यापि हितोपदेशं श्रोतुं न सिद्धः" इति उक्तवती सरमा।

अत्रान्तरे रावणसैन्येन कृतः भेरीनिनादः श्रुतः। समनन्तरम् एव वानरैः कृतः सिंहनादः अपि श्रुतः। रामलक्ष्मणौ युद्धार्थं लङ्काभिमुखं प्रस्थितवन्तौ इत्येतं भावं सूचयति स्म सः वानरकृतः सिंहनादः। सीतया अभिज्ञातुं शक्यः हनूमतः कण्ठध्वनिः मध्ये मध्ये श्रूयते स्म।

वानरसेनायाः कोलाहलं श्रुत्वा रावणः सभाङ्गणं प्रविश्य मन्त्रिणः मेलयित्वा उक्तवान्– "हनूमान् समुद्रम् उल्लङ्घ्य आगतः इति, सेतुं निर्माय रामः लङ्कासमीपम् आगतः इति च साभिमानम् उक्तवन्तः भवन्तः इदानीं किमर्थं म्लानमुखाः सन्तः भीरवः इव मौनम् आश्रितवन्तः? स्वकीयम् आशयं वदन्तु तावत्" इति।

तदा माल्यवान् नाम मन्त्री अग्रे आगत्य उक्तवान्– "महाप्रभो, रामस्य बलम् अस्मदपेक्षया अधिकम् इत्यत्र नास्ति सन्देहः। अतः सन्धिप्रस्तावः कृतः चेत् एव वरम् इति भावयामः वयम्। सीतापहारः एव रामवैरस्य हेतुः। अतः सीता प्रत्यर्पिता चेत् रामः अन्यत् किमपि अनपेक्षमाणः इतः निर्गच्छेत्। तदा राक्षसकुलम् अपि रक्षितं स्यात्" इति।

"भवता ब्रह्मणः वरं यदा प्राप्तं तदा देवमानवादिभ्यः मरणं न भवेत् इति प्रार्थितम्। किन्तु वानरात् भल्लूकात् वा मरणं मा भवतु इति तु न प्रार्थितम्। इदानीं रामेण सह आगताः वानराः भल्लूकाः च। अतः विचिन्त्य निर्णयः वरम्। सन्धिः एव श्रेयान्"

इत्यपि निवेदितवान् माल्यवान्।

किन्तु मन्त्रिणः माल्यवतः वचनं रावणाय न अरोचत। सः माल्यवन्तं तीक्ष्णदृष्ट्या पश्यन्– "भोः, हितवचनकथनव्याजेन मां भीरुताम् उपदिशति वा भवान्? रामः कश्चन असहायः पुरुषः। पिता एव तं राज्यात् बहिष्कृतवान् अस्ति। अरण्ये अटन् कपीनां स्नेहेन जीवन् रामः अतुलपराक्रमशाली इति कथं वदति भवान्? अहम् अस्मि समर्थस्य राक्षसकुलस्य प्रभुः। सकलेषु देवेषु भीतिं जनितवान् पराक्रमशाली अहम् एव। का न्यूनता दृष्टा मयि, येन भवान् माम् एवम् उपदिशेत्? मम उन्नतिम् असहमानः वा, शत्रुपक्षपातेन वा भवान् एवं वदन् अस्ति। प्रत्यर्पणोद्देशेन किं सीता मया आनीता? किं रामेण सह युद्धं कर्तुं भीतिः मम? रावणं माम् इतोऽपि सम्यक् न अवगतवन्तः भवन्तः। मम शिरसां कर्तनं किम्, एकं केशं कम्पयितुम् अपि न शक्नोति रामः। रामः यदि राक्षसान् नाशयितुं शक्नुयात् तर्हि अहं समग्रं वानरकुलम् एव नाशयिष्यामि। मम कीर्तिः प्रपञ्चे आचन्द्रार्कं यथा तिष्ठेत् तथा करिष्यामि" इति उक्तवान्।

रावणस्य क्रोधं दृष्ट्वा माल्यवान् मौनम् आश्रितवान्। क्षणकालस्य अनन्तरं जयवचनानि उक्त्वा ततः निर्गतवान् सः। अन्यैः मन्त्रिभिः सह रावणः युद्धचर्याविषये चर्चाम् आरब्धवान्।




सर्वैः सम्भूय युद्धतन्त्रं निर्णीतम्– लङ्कानगर्याः पश्चिमद्वारे इन्द्रजित्, उत्तरद्वारे शुकसारणौ, मध्यभागे विरूपाक्षः च राक्षससेनया सह तिष्ठेयुः इति। एतदनन्तरं सर्वेषु जयकारं कुर्वत्सु रावणः ततः अन्तःपुरं गतवान्।

लङ्कानगरसमीपम् आगतः रामः लक्ष्मणादिभिः सह वार्तालापं कुर्वन् सुग्रीवम् उक्तवान्– "लङ्कानगरी अस्माकं पुरतः अस्ति। देवैः अपि एषा जेतुम् अशक्या इति ख्यातिः श्रूयते। अतः इदानीं किं करणीयम्? अग्रिमपदं किं स्यात् अस्माकम्?" इति।

तदा पार्श्वे स्थितः विभीषणः उक्तवान्– "मम मन्त्रिणः पक्षिरूपेण गत्वा



लङ्कानगर्याः युद्धसन्नाहं दृष्ट्वा प्रत्यागताः सन्ति। प्रहस्तः पूर्वद्वारे, महोदर-महापार्श्वौ दक्षिणद्वारे, इन्द्रजित् पश्चिमद्वारे, विरूपाक्षः मध्यभागे, शुकसारणौ उत्तरद्वारे रक्षणकार्यनिरताः सन्ति'' इति। विभीषणस्य मन्त्रिणः अपि आत्मना दृष्टं समग्रं विस्तरेण निवेदितवन्तः। 'पराक्रमेण रावणसमाः षष्टिलक्षराक्षसाः शत्रुपक्षे सन्ति' इति निवेदितवान् विभीषणः।

अनन्तरं कः वीरः कुत्र युद्धं कुर्यात् इति निर्णीय उक्तवान् रामः। पूर्वद्वारे प्रहस्तेन सह नलः, दक्षिणद्वारे महापार्श्वमहोदराभ्यां सह अङ्गदः, पश्चिमद्वारे इन्द्रजिता सह हनूमान्, उत्तरद्वारे रावणेन सह रामः च युद्धं कुर्यात् इति निर्णीतम्। 'रामेण सह लक्ष्मणः तिष्ठेत्। सुग्रीवः, जाम्बवान्, विभीषणः इत्यादयः मध्यभागे युद्धं कुर्युः। केनापि वानरेण मानवरूपं न धर्तव्यम्। सुग्रीवः, अङ्गदः, हनूमान्, नीलः, विभीषणः च यदा इच्छा तदा मानवरूपं धर्तुम् अर्हन्ति' इत्यपि निर्णीतम्।

समालोचनं समाप्य रामः लक्ष्मणेन सह सुवेलपर्वतम् आरोढुम् उद्युक्तः। विभीषणादयः अपि तम् अनुसृतवन्तः। रात्रिः पर्वतस्य उपरि एव यापनीया इति निर्णीतम्। सुवेलपर्वतस्य शिखरे स्थितं चेत् त्रिकूटपर्वतस्य उपरि स्थिता लङ्कानगरी स्फुटं दृश्यते स्म। रामादयः लङ्कानगरीं तत्र निवसतः राक्षसान् च दृष्टवन्तः। वानराः सिंहनादं कृतवन्तः।

अत्रान्तरे सूर्यः अस्तं गतः। सर्वे सुवेलपर्वतस्य उपरि शयानाः रात्रिं यापितवन्तः। प्रातःकाले सुन्दराणि लङ्कानगरीयाणि वनानि उपवनानि च तैः दृष्टानि। रावणस्य प्रासादः उन्नतः आसीत्, विशेषतः अलङ्कृतः आसीत् अपि।

प्रासादे स्थितः रावणः दृष्टः सुग्रीवेण। रावणः यथा शृणुयात् तथा उच्चध्वनिना उक्तवान् सुग्रीवः— ''अये रावण! रामस्य मित्रं सुग्रीवः अस्मि अहम्। वयम् उपस्थिताः स्मः। मृत्युः अपि भवतः गृहस्य पुरतः उपस्थितः अस्ति'' इति।

''अये वानरराज! अन्वर्थं नाम भवतः।

भवतः कण्ठः तुण्डात् यथा पृथक् भवेत् तथा करिष्यामि" इति उक्तवान् रावणः। तावता सुग्रीवः ततः उत्प्लुत्य रावणप्रासादं गतवान्। सुग्रीवरावणयोः बाहुयुद्धं प्रवृत्तम्।

दीर्घकालं यावत् तयोः युद्धं प्रवृत्तम्। मुष्टिप्रहारेण, परस्परताडनेन, पातनेन च तौ युद्धं कुरुतः। उभयोः अपि समबलत्वं दृश्यते स्म। क्रमशः रावणे श्रान्तिचिह्नानि दृष्टानि। तदा रावणः मायायुद्धार्थम् उद्युक्तः। एतत् जानन् सुग्रीवः झटिति उत्प्लुत्य आकाशे स्थितवान्। 'सुग्रीवः अधः आगच्छेत्' इति प्रतीक्षमाणः आसीत् रावणः। किन्तु सुग्रीवः रामस्य पार्श्वे गत्वा स्थितवान्।

रामः सुग्रीवस्य अविवेकितां निन्दन् उक्तवान्– "कमपि अनुक्त्वा किमर्थं गतः भवान्? राजा कदापि अविचिन्त्य किमपि न कुर्यात्। भवतः का गतिः स्यात् इति आतङ्केन वयं सर्वे चिन्ताक्रान्ताः आस्म। भवतः कापि हानिः यदि स्यात् तर्हि अस्माकं स्थितिः शोचनीया अभविष्यत्। रावणं संहृत्य विभीषणाय राक्षसराज्यं समर्प्य अयोध्यां प्रति गन्तव्यम् इति मम सङ्कल्पः। एतस्य कार्यस्य लोपः कोऽपि यथा न स्यात् तथा व्यवहारः भवेत् सर्वेषाम्" इति।

"भवता यत् उच्यते तत्तु सत्यम् एव। किन्तु सीतापहारकस्य शत्रोः दर्शनानन्तरं भर्त्सनानन्तरं चापि कथम् अहं मौनं तिष्ठेयम्?" इति उक्तवान् सुग्रीवः।

सर्वे पर्वतशिखरात् अधः आगतवन्तः। रामः युद्धार्थं प्रस्थितवान्। तम् अनुसरन्तः लक्ष्मणः, विभीषणः, सुग्रीवः, हनूमान्, जाम्बवान्, नलः, सुषेणः, नीलः इत्यादयः प्रमुखाः गतवन्तः। तेषां पृष्ठतः सागरसदृशी वानरसेना अपि प्रस्थिता।

रामलक्ष्मणौ लङ्कानगरस्य उत्तरद्वारस्य समीपं गतवन्तौ। तत्र रावणः एव द्वाररक्षणकार्ये उद्युक्तः आसीत्। विविधैः मारकास्त्रैः दिव्यास्त्रैः च युक्ता राक्षससेना युद्धार्थं सिद्धा सती रावणस्य आज्ञां प्रतीक्षमाणा आसीत्।





# समर्था स्नुषा

चक्रपाणिः नाम गृहस्थः पूर्वम् आसीत्। तस्य पत्न्याः नाम भद्राम्बा। तयोः चत्वारः पुत्राः। प्राप्तवयस्काः ते विवाहिताः अभवन्। चतुर्णाम् अपि पुत्राणां पुत्रादयः अपि जाताः। एवं केषुचित् वर्षेषु चक्रपाणेः कुटुम्बं विशालं जातम्।

गृहस्य समग्रव्यवस्थायाः निर्वहणं भद्राम्बा एव करोति स्म। गच्छता कालेन भद्राम्बा वृद्धा जाता। अतः सा चिन्तयति– 'अहं तु वृद्धा जाता। मम अनन्तरं कुटुम्बनिर्वहणं स्नुषासु का कुर्यात्?' इति।

भद्राम्बा पतिं स्वचिन्तां निवेदितवती। समर्थायै स्नुषायै गृहनिर्वहणभारः दत्तः चेत् वरम् इति चक्रपाणेः अपि आशयः। अतः स्नुषासु का समर्थतमा इति ज्ञातुं काचित् परीक्षा करणीया इति निश्चितवान् सः।

सः चतस्रः अपि स्नुषाः स्वसमीपम् आहूय एकैकस्यै पञ्च व्रीहीन् दत्त्वा– "यदा अहं वदामि तदा एते प्रत्यर्पणीयाः। किन्तु कदा अहं प्रतिस्वीकरिष्यामि इति न जानामि। अतः एतान् जागरूकतया रक्षन्तु भवत्यः" इति उक्तवान्।

श्वशुरस्य कथनस्य आशयः कः इति अजानत्यः स्नुषाः आश्चर्येण परस्परं मुखं दृष्टवत्यः। 'कृषिव्यवहारव्यग्रः एषः मनसि कमपि व्यवहारक्लेशं चिन्तयन् प्रमादवशात् एवं पञ्च व्रीहीन् दत्तवान् स्यात्। मूढः श्वशुरः' इति उपहासपूर्वकं परस्परम् उक्तवत्यः ताः।

व्रीहीन् प्राप्तवतीनां स्नुषाणां व्यवहारः परस्परं नितरां भिन्नः आसीत्। 'गृहे कुसूले प्रभूतः व्रीहिराशिः अस्ति एव। यदा श्वशुरः सूचयिष्यति तदा व्रीहिदाने न कोऽपि क्लेशः। अतः एतेषां रक्षणार्थं परिश्रमः व्यर्थः' इति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



आलोच्य ज्येष्ठस्नुषा व्रीहीन् क्षिप्तवती।

द्वितीया स्नुषा अपि व्रीहिरक्षणं व्यर्थम् इत्येव चिन्तितवती। किन्तु श्वशुरविषयकेण आदरभावेन सा व्रीहेः तुषम् अपनीय तण्डुलान् मुखे स्थापितवती।

तृतीया तु श्वशुरेण दत्तान् व्रीहीन् कागदेन बद्ध्वा पेटिकायां स्थापितवती।

चतुर्थी स्नुषा– 'श्वशुरः व्रीहीन् कदा प्रतिप्राप्स्यति इति तु न ज्ञायते। वस्तुतः तु श्वशुरः बुद्धिमान्। सामान्येन उद्देशेन सः व्रीहीन् दत्तवान् न स्यात्। व्रिहिदाने कोऽपि विशिष्टः उद्देशः स्यात् एव। व्रीहिः क्षेत्रे आरोपितः चेत् द्विगुणितं चतुर्गुणितं वा फलं प्राप्यते। यदा श्वशुरः प्रतिपृच्छति तदा व्रीहिः हस्ते न स्यात् चेदपि क्षेत्रे अस्ति इति वदामि चेत् तस्य सन्तोषः एव स्यात्' इति आलोच्य व्रीहीन् मातृगृहं सम्प्रेष्य तेषां पृथक् आवापं कारितवती। प्रथमवर्षे यत् फलं प्राप्तं तत् द्वितीये वर्षे भूमौ आरोपितम्। तस्य यत् फलं तदपि समग्रतया भूमौ आरोपितम्।

ततः पञ्च वर्षाणि अतीतानि। भद्राम्बा कदाचित् पतिम् उक्तवती– "वार्धक्यकारणतः नितरां दुर्बला अस्मि। उपवेशनेन उत्थानेन चापि श्रान्ता भवामि। अतः गृहव्यवहारं कस्याः स्नुषायाः अधीनं करोमि? भवान् पूर्वम् उक्तवान् आसीत्– काञ्चित् व्यवस्थां करिष्यामि इति। किन्तु तदनन्तरं पञ्च वर्षाणि अतीतानि। इदानीं वा काञ्चित् व्यवस्थां सूचयतु कृपया" इति।

"तिष्ठतु, वदामि" इति उक्त्वा चक्रपाणिः स्नुषाः आहूय उक्तवान्– "मया पूर्वं दत्तान् व्रीहीन् प्रत्यर्पयन्तु" इति।

'क्षिप्तं, खादितम् इति कथनेन श्वशुरः खिन्नः भवेत्' इति आलोच्य प्रथमा द्वितीया च स्नुषे कुसूलतः पञ्च व्रीहीन् आनीय श्वशुराय दत्तवत्यौ। तृतीया स्नुषा पेटिकायां सुरक्षितं स्थापितान् व्रीहीन् आनीय श्वशुरस्य पुरतः स्थापितवती।

प्रथमया द्वितीयया च आनीताः व्रीहयः पीतवर्णेण शोभमानाः नूतनत्वं ज्ञापयन्ति स्म। अतः चक्रपाणिः– "एते मया दत्ताः व्रीहयः न। मया दत्तान् व्रीहीन् किं कृतवत्यौ भवत्यौ?" इति पृष्टवान्।

तदा ते लज्जया शिरः अवनमय्य, व्रीहयः क्षिप्ताः आसन् इति, इदानीं कुसूलतः अन्याः एव व्रीहयः आनीताः इति च उक्तवत्यौ।

चक्रपाणिः चतुर्थीं स्नुषां पश्यन् पृष्टवान्– "वत्से! भवत्यै मया दत्ताः व्रीहयः कुत्र?" इति।

"ते मया मातृगृहं प्रति प्रेषिताः। दिनद्वयात्मकः अवधिः दत्तः चेत् लाभसहितं ते आनीयन्ते" इति उक्त्वा श्वशुरस्य अनुज्ञां प्राप्य मातृगृहं गतवती चतुर्थी स्नुषा। दिनद्वयाभ्यन्तरे धान्यगोणीभिः युक्तानि शकटानि चक्रपाणेः गृहस्य पुरतः आगत्य स्थितानि। "पञ्चानां व्रीहीणां फलम् एतानि" इति उक्त्वा कर्मकरद्वारा धान्यगोणीः अन्तः स्थापितवती चतुर्थी स्नुषा।

"ज्ञातं खलु स्नुषाणां सामर्थ्यम्? चतुर्थी स्नुषा एव गृहस्य समग्रं भारं वोढुं शक्नोति। अतः तस्यै एव कुञ्चिकां ददातु" इति पत्नीम् उक्तवान् चक्रपाणिः।

"अन्याः अपि अस्मदीयाः एव खलु? ताभ्यः कीदृशं दायित्वं दातव्यम्?" इति पतिं पृष्टवती भद्राम्बा।

"या व्रीहीन् क्षिप्तवती सा ज्येष्ठा स्नुषा स्वच्छताकार्ये गृहालङ्करणकार्ये च योजनीया। या व्रीहीन् खादितवती सा द्वितीया स्नुषा पाकशालकार्याणि निर्वहतु। या व्रीहीन् पेटिकायां स्थापितवती सा तृतीया स्नुषा वस्त्रधान्यादिरक्षणं पश्यतु। अन्तिमनिर्णयः सर्वत्र अपि चतुर्थस्नुषायाः भवतु। एतेन गृहे सदा तृप्तिः शान्तिः च स्थास्यति" इति सूचितवान् चक्रपाणिः।

पत्युः सूचनायाः अनुगुणं स्नुषाभ्यः कार्याणि विभज्य दत्तवती भद्राम्बा। तासां कार्यं स्वयं परिशीलयन्ती प्रीत्या योग्यं मार्गदर्शनम् अपि कृतवती सा। एतेन स्नुषाः स्वस्वकार्यनिर्वहणे चतुराः जाताः। गृहव्यवस्था अपि सम्यक् जाता।

अनन्तरं चक्रपाणिः भद्राम्बा च वार्धक्यजीवनं तृप्त्या यापितवन्तौ।





# मित्रपीडा

बहुभ्यः वर्षेभ्यः पूर्वं राजपुरनामके ग्रामे राजेन्द्रः नाम भूस्वामी आसीत्। तस्य मित्रजनाः बहवः। ते समयासमयम् अपश्यन्तः सर्वदा राजेन्द्रस्य गृहम् आगच्छन्तः हासजल्पनादिभिः गृहे महान्तं कोलाकलं जनयन्ति स्म।

तेषां कोलाहलतः राजेन्द्रः नितरां पीडितः भवति। किन्तु ते सर्वे आढ्यकुलजाताः इत्यतः स्पष्टवचनैः तेषाम् आगमनं निराकर्तुं न शक्नोति स्म सः। एवं दाक्षिण्यप्रवृत्तिमान् राजेन्द्रः मित्राणां पीडां निवारयितुं न शक्नोति, सोढुम् अपि न शक्नोति।

दिने दिने मित्राणां पीडा वर्धमाना जाता। एतां सोढुम् अशक्नुवन् राजेन्द्रः स्वसाहाय्यकं दिवाकरम् आहूय– "पीडानिवारणार्थं कमपि उपायं चिन्तयतु कृपया" इति प्रार्थितवान्। दिवाकरः एतत् अङ्गीकृतवान्।

अनन्तरदिने राजेन्द्रः यदा मित्रगणेन परिवृतः आसीत् तदा उत्तमां वेष्टीम्, उत्तमं युतकम्, उष्णीषं च धृत्वा श्मश्रुधारी कश्चन गम्भीरः पुरुषः स्वागतप्रकोष्ठं प्रविष्टवान्। तस्य आकृतिं गाम्भीर्यं च दृष्ट्वा सर्वे आश्चर्येण मौनम् आश्रितवन्तः।

सर्वेषु पश्यत्सु, राजेन्द्रः झटिति उत्थाय आदरेण स्वागतीकृत्य स्वहस्तेन तदीयं हस्तं गृहीत्वा अग्रे आनीतवान्।

'भूस्वामिनः आदरपात्रम् एषः कः स्यात्?' इति सर्वे चिन्तयन्तः सन्ति। भूस्वामी तम् आगन्तुकं मित्रमण्डलस्य मध्ये उपवेशितवान्। सः आगन्तुकः राजेन्द्रस्य कर्णे पञ्चषाणि वाक्यानि मन्दस्वरेण उक्तवान्। अनन्तरम् उत्थाय– "गमनार्थम् अनुज्ञादानेन अहम् अनुग्रहणीयः" इति उक्त्वा ततः निर्गन्तुम् उद्युक्तः।

"भामहः"

भूस्वामी राजेन्द्रः अपि तेनैव सह उत्थाय मुखद्वारपर्यन्तं तेनैव सह गत्वा हस्तं चालयन् सन्तोषेण तं प्रेषितवान्।

यदा आगन्तुकेन सह भूस्वामी गच्छन् आसीत् तदा मित्रगणीयाः केचन– "कोऽयं महापुरुषः? एतस्य स्वागतार्थं भूस्वामी स्वयम् उत्थाय गतवान्। आदरेण स्वागतीकृतवान्। प्रेषणार्थं मुखद्वारपर्यन्तम् अपि गतवान्। अस्मासु केनापि एतादृशः आदरः न प्राप्तः। भूस्वामिनः व्यवहारेण ज्ञायते यत् सः महादरपात्रम् इति। एषः विशिष्टः पुरुषः कः स्यात्?" इति परस्परम् उक्तवन्तः।

तदा तत्रैव स्थितः दिवाकरः उक्तवान्– "भूस्वामिना इतः पूर्वं कस्यापि विषये एतावान् आदरः न प्रदर्शितः आसीत् इति तु सत्यम् एव। भूस्वामी तदा तदा वार्तालापमध्ये वदति स्म– नगरे मम आदरातिशयपात्रं मित्रम् अमरेन्द्रः अस्ति इति। अहं भावयामि– इदानीम् आगत्य गतः एषः अमरेन्द्रः एव स्यात् इति" इति।

"अमरेन्द्रः इति? अश्रुतपूर्वं नाम एतत्। एतस्य तादृशं वैशिष्ट्यं किं स्यात्, येन भूस्वामी एतावन्तम् आदरं प्रकटयेत्?" इति आश्चर्येण पृष्टवन्तः मित्रजनाः।

तदा दिवाकरः उक्तवान्– "अस्माकं भूस्वामी समयप्रज्ञाविषये आदरवान्। कुत्र कियत्कालं स्थातव्यम् इति, कदा गन्तव्यम् इति च ये जानन्ति तान् महता आदरेण पश्यति सः। अमरेन्द्रः तु एकं क्षणम् अपि



कुत्रापि व्यर्थं न यापयति। अतः तद्विषये अस्माकं भूस्वामिनः तावान् आदरः। व्यर्थं समयस्य यापनं न इच्छति अस्माकं भूस्वामी'' इति।

'भवत्सु समयप्रज्ञा नास्ति। भवन्तः व्यर्थं समयं यापयन्ति। अतः भवत्सु भूस्वामी आदरवान् न' इत्येतं विषयं परोक्षरूपेण सूचितवान् आसीत् दिवाकरः। एतत् अवगच्छन्तः मित्रजनाः म्लानवदनाः सन्तः अपि मिथ्याहासं प्रकटयन्तः ततः निर्गन्तुम् उद्युक्ताः।

मित्रं सम्प्रेष्य प्रत्यागच्छन् राजेन्द्रः एतेषां निर्गमनं दृष्ट्वा मन्दहासपूर्वकं पृष्टवान्– ''किं सर्वे अपि युगपत् प्रस्थिताः? कः विशेषः?'' इति।

किम् उत्तरं वक्तव्यम् इति अजानन्तः सर्वे मौनं स्थितवन्तः। तदा कश्चन ज्येष्ठः उक्तवान्– ''मम बन्धुः कश्चन अद्य दूरदेशं गच्छति। तस्य प्रेषणार्थम् अस्माभिः सर्वैः गन्तव्यम् आसीत्। वयं तत् विस्मृत्य अत्र जल्पन्तः व्यर्थं समययापनं कुर्वन्तः आस्म। वार्तालापमध्ये केनचित् स च विषयः स्मारितः। अतः त्वरया गच्छन्तः स्मः'' इति।

''अस्तु तर्हि। पुनः मिलाम तावत्'' इति उक्तवान् भूस्वामी। सर्वे ततः निर्गताः।

राजेन्द्रः अन्तः आगत्य दिवाकरं पश्यन् मन्दहासपूर्वकम् उक्तवान्– ''समीचीनः उपायः कृतः भवता। समयस्य महत्त्वं ज्ञात्वा इतः निर्गताः एते पुनः विना कारणं जल्पनार्थम् अत्र न आगच्छयुः। शत्रोः निवारणं सुकरं स्यात्, किन्तु हितशत्रूणां निवारणे कौशलम् आवश्यकम्। यत्र धनं भवति तत्र दीपं परितः पतङ्गः इव एतादृशाः भवन्ति एव। भवतः उपायः फलकारी जातः। अमरेन्द्रपात्रधारिणा अपि सम्यक् एव अभिनीतम्। तस्मै योग्यम् उपायनं दातव्यम्'' इति।

''मम आशयस्य अनुगुणं व्यवहरतः भवतः अभिनयः अपि उत्तमः एव आसीत्'' इति हसन् साभिमानम् उक्तवान् दिवाकरः।





# निम्बवृक्षमहिमा

मलयाळराज्यं पूर्वं जामोरिन्राजः पालयन् आसीत्। तस्य धनलोभः अधिकः। अतः सः समग्रे राज्ये तिन्त्रिणीवनं निर्मातव्यम् इति निश्चित्य एतदर्थं मन्त्रिणः आज्ञापितवान्।

तस्मिन् राज्ये नम्बियार्नामकः प्रसिद्धः वैद्यः आसीत्। वृक्षमूल-रस-पर्णादीनां साहाय्येन औषधस्य निर्माणे सः अद्वितीयः आसीत्। समग्रे भारते तस्य कीर्तिः आसीत्। तत्काले देहलीशासकस्य आस्थाने स्थितः अरबवैद्यः प्रकृतिचिकित्सायां सुविख्यातः आसीत्। नम्बियारः अरबवैद्यः च प्रायः सामर्थ्येन समानौ इति जनाः वदन्ति स्म।

जामोरिन्राजः समग्रे देशे तिन्त्रिणीवनं संवर्धयितुं सङ्कल्पितवान् अस्ति इति ज्ञात्वा नम्बियारः राज्ञः समीपं गत्वा निवेदितवान्– "महाप्रभो, काचित् विज्ञप्तिः मम। तिन्त्रिणीवृक्षाः लाभकारिणः स्युः। किन्तु अनारोग्यकारिणः ते। अतः आरोग्यवर्धकाः निम्बवृक्षाः देशे सर्वत्र आरोपणीयाः इति विज्ञाप्यते मया। निम्बवृक्षाणां वायुः आरोग्यं वर्धयति, साङ्क्रामिकरोगं निवारयति च" - इति।

नम्बियार्वैद्यस्य प्रार्थनां निराकुर्वन् उक्तवान् जामोरिन्राजः– "वैद्यमहाशय! तिन्त्रिणीवृक्षाः विविधोपयोगिनः। तिन्त्रिणीफलस्य क्रेतारः बहवः। तिन्त्रिणीकाष्ठं गृहनिर्माणार्थम् अत्युपयोगी। तिन्त्रिणीशलाका दन्तधावनार्थम् उपयुज्यते। तिन्त्रिणीपुष्पाणि किसलयाः च खादने रुचिकराः। तिन्त्रिणीवृक्षः छायादायकः अपि। अतः मार्गाणां पार्श्वे तिन्त्रिणीवृक्षस्य आरोपणम् एव वरम्। निम्बवृक्षस्य आरोपणेन न कोऽपि विशेषलाभः। एवं ननु" इति।

नम्बियार्वैद्यः उत्तरं किमपि वक्तुम् अशक्नुवन् ततः मन्त्रिणः गृहं गतवान्। मन्त्री

"मलयाळजानपदकथा"



तम् आदरेण स्वागतीकृत्य पानीयादिभिः सत्कृत्य कुशलप्रश्नान् पृष्टवान्।

नम्बियार्वैद्यः उत्तरं किमपि अयच्छन् गाम्भीर्येण मन्त्रिणः नाडीं, नेत्रे, उरः, उदरं च स्पृष्ट्वा परीक्षितुम् उद्युक्तः।

तदा मन्त्री हसन् पृष्टवान्– "किमर्थं मम परीक्षा? दैवानुग्रहतः मम किमपि अस्वास्थ्यं नास्ति खलु?" इति।

नम्बियार्वैद्यः गाम्भीर्येण एवं उत्तरं दत्तवान्– "इदानीं किमपि अस्वास्थ्यं नास्ति इति तु सत्यम् एव। किन्तु भाविनि काले घोररोगेण भवान् पीड्यते इत्यपि सत्यम्। अतः योग्ये समये योग्या चिकित्सा अवश्यं करणीया" इति।

तदा दिग्भ्रान्तः मन्त्री उक्तवान्– "एवं तर्हि अद्यैव भवान् चिकित्सायाः आरम्भं करोतु" इति।

"चिकित्सार्थं यदि मम सामर्थ्यं स्यात् तर्हि काऽपि चिन्ता न अभविष्यत्। एतस्य रोगस्य चिकित्सां कर्तुं देहलीनगरस्थः अरबवैद्यः एव समर्थः, न अन्यः" इति उक्तवान् नम्बियार्वैद्यः।

"चिकित्सार्थं तावद्दूरं गन्तव्यं वा मया? इतः गतं मां सः अरबवैद्यः आदरेण पश्येत् वा? तावत्कालम् अहं जीवेयं वा?" इति सोद्वेगम् उक्तवान् मन्त्री।

"मन्त्रिवर्य! भीतिः मास्तु। भवान् चिकित्सां प्राप्य प्रत्यागमिष्यति इत्यत्र दृढः विश्वासः मम। रोगपीडा इतोऽपि न आरब्धा इत्यतः काऽपि चिन्ता करणीया नास्ति। अरबवैद्यः तु धनिकनिर्धनभेदम् अकुर्वन् सर्वान् समानतया पश्यति। अतः चिन्तां विना भवान् अद्यैव चिकित्सार्थं निर्गच्छतु" इति सूचितवान् नम्बियार्वैद्यः।

नम्बियार्वैद्यस्य वचनं तिरस्कारयोग्यं न इत्यतः मन्त्री राज्ञः अनुज्ञां प्राप्य देहलीनगरं प्रति प्रस्थितवान्। प्रस्थानसमये नम्बियार्वैद्यः मन्त्रिणं सूचितवान्– "मार्गे तिन्त्रिणीवृक्षस्य अधः एव भवतः विश्रान्तिः भवतु। सर्वदा तिन्त्रिणीवने वासः भवतु। तिन्त्रिणीशलाकया एव दन्तधावनं करणीयम्। तिन्त्रिणीकाष्ठम् एव पाकार्थम्

उपयोक्तव्यम्। तिन्त्रिणीफल-किसलयादयः एव पाकार्थम् उपयोक्तव्याः'' इति।

एताः सूचनाः अक्षरशः पालयन् मन्त्री सपरिवारं देहलीं प्रति गतवान्। देहलीप्राप्तितः पूर्वम् एव तदीयम् आरोग्यं नष्टम्। शक्तिह्रासतः सः नितरां कृशः जातः।

'अहो, नम्बियार्वैद्यस्य करुणालुता, रोगाभिज्ञानसामर्थ्यं च! सम्भाव्यं रोगं पूर्वम् एव ज्ञात्वा सूचयन् मां रक्षितवान् सः' इति चिन्तयन् मन्त्री देहलीनगरं प्राप्तवान्।

अल्पेन एव श्रमेण अरबवैद्यस्य दर्शनं जातम्। मन्त्रिणा उक्तं समग्रं श्रद्धया श्रुतवान् वैद्यः। तिन्त्रिणीवृक्षाणाम् आरोपणेन हानिः भवति इत्येतम् अंशं प्रमाणीकर्तुम् एव नम्बियार्वैद्यः मन्त्रिणं मम समीपं प्रेषितवान् इति अवगतवान् सः।

अतः सः उक्तवान्– ''मन्त्रिवर्य! भवतः व्याधिः तीव्रः चेदपि एतस्य चिकित्सा न क्लेशाय। योग्ये समये भवान् अत्र आगतवान् अस्ति'' इति।

''चिकित्सा क्लेशकरी न? तर्हि उज्जीवितः अहम्! समीचीनं चिकित्साक्रमं सूचयतु तावत्'' इति उक्तवान् मन्त्री।

''अविलम्बेन भवता इतः स्वराज्यं प्रति गन्तव्यम्। गमनसमये विश्रान्त्यर्थं निम्बवृक्षः एव आश्रयणीयः। निम्बवने एव रात्रौ वसतिः करणीया। निम्बपत्रव्यजनेन एव वीजनीयम्। दन्तधावनार्थं निम्बशलाका उपयोक्तव्या। गण्डूषार्थं निम्बरसयुक्तं



जलम् उपयोक्तव्यम्। एषा चिकित्सा विना लोपं कृता चेत् भवतः व्याधिः अचिरात् एव अपगमिष्यति। स्वनगरं गत्वा नम्बियार्वैद्यं मम नमस्कारान् निवेदयतु। स्वनगरप्राप्तिसमये भवान् पूर्वापेक्षया स्वस्थः भविष्यति। भवतः प्रयाणं शुभकरं भवतु'' इति उक्तवान् अरबवैद्यः।

अरबवैद्येन उक्तम् विनयेन अङ्गीकुर्वन् मन्त्री सपरिवारं ततः प्रस्थाय अरबवैद्येन यथा उक्तं तथैव निम्बवृक्षस्य उपयोगं कुर्वन् स्वनगरं प्राप्तवान्। एतेन तदीये मुखे विशेषकान्तिः दृश्यते स्म। अस्वास्थ्यं सर्वथा अपगतम् आसीत्। शरीरे नवचैतन्यं दृश्यते स्म।

मन्त्रिणः आगमनवार्तां श्रुत्वा नम्बियार्वैद्यः तं द्रष्टुम् आगतः। मन्त्री तं स्वकीयम् अनुभवं विस्तरेण उक्तवान्।

''आगच्छतु। आवां जामोरिन्राजं पश्याव। भवतः अनुभवः तेन अवश्यं श्रोतव्यः'' इति उक्तवान् नम्बियार्वैद्यः।

उभौ अपि मिलित्वा जामोरिन्राजस्य समीपं गतवन्तौ। मन्त्रिणः अनुभवं विस्तरेण श्रुत्वा राजा आश्चर्यचकितः।

''अत्र एकं रहस्यम् उद्घाटयन् अस्मि। वस्तुतः मया अल्पः अपराधः कृतः। मन्त्रिणः कोऽपि रोगः न आसीत्। निम्बवृक्षस्य माहात्म्यं ज्ञापयितुं तिन्त्रिणीवृक्षस्य हानिकारितां निवेदयितुं च मया असत्यम् उक्त्वा मन्त्री देहलीं प्रेषितः। तिन्त्रिणीवृक्षसहवासतः देहलीप्राप्तिसमये मन्त्री अस्वस्थः जातः। अरबवैद्यः मम अन्तरङ्गं जानन् निम्बवृक्षसेवनं चिकित्सारूपेण विहितवान्। अतः मन्त्री स्वस्थः जातः। अतः तिन्त्रिणीवृक्षाणाम् आरोपणविचारं परित्यज्य निम्बवृक्षाः आरोपणीयाः इति मम नम्रं निवेदनम्'' इति उक्तवान् नम्बियार्वैद्यः।

जामोरिन्राजः नम्बियार्वैद्यस्य प्रार्थनां पुरस्कुर्वन् समग्रे राज्ये निम्बवृक्षारोपणार्थम् आज्ञां कृतवान्।



# प्रकृतिवैचित्र्याणि—

## मानवमुखचिह्नयुक्तः सर्पः

तमिळनाडुराज्यस्य कुम्भकोणं समीपे वलङ्गैमान्नामके ग्रामे चतुर्भ्यः मासेभ्यः पूर्वं मावनमुखचिह्नयुक्तः' सर्पः जनैः दृष्टः। तस्य फणायां मानवस्य इव नेत्रे नासिका मुखं च स्फुटं दृश्यन्ते स्म। एतत् दृष्ट्वा तत्रत्याः जनाः नितराम् आश्चर्यचकिताः अभवन्।



## वामनाः जलगजाः



जलगजेष्वपि अल्पाकारकाः वामनाः जलगजाः भवन्ति। आफ्रिकादेशे नैजीरियाखातेषु वामनाः जलगजाः भूयसा निवसन्ति। एषु दिनेषु एतेषां सङ्ख्यायां महान् ह्रासः दृश्यते। एतेषाम् औन्नत्यं प्रायः ७५ सें.मी.। जलगजस्य सामान्यम् औन्नत्यं १५० सें.मीं. भवति। दैर्घ्यं च २.५ मीटर् स्यात्। जलगजाः दिने तृणमये प्रदेशे सञ्चरन्तः कन्दमूलादिकं, तृणानि, फलानि च खादन्तः रात्रौ जले सुखेन तरन्तः भवन्ति।

## वन्यकुक्कुटजातीयः बस्टर्ड्

वन्यकुक्कुटजातीयः बस्टर्ड्नामकः पक्षी भारते सर्वथा नष्टः इति भावितम् आसीत्। किन्तु अपूर्वः एषः पक्षी एषु दिनेषु कर्नूल्समीपे अरण्ये दृष्टिगोचरः जातः। पक्षिप्रियाणां सन्तोषकरी वार्ता एषा। एषः पक्षी पूर्वं राजस्थानं, गुजरात्, महाराष्ट्रम्, मध्यप्रदेशः इत्यादिषु राज्येषु दृश्यते स्म। १९४० तमवर्षं यावत् रायलसीमाप्रदेशे एषः दृश्यते स्म। मीटर् दैर्घ्यात्मकः एषः पक्षी पतङ्गान् कीटान् गोधिकाः च खादन् जीवति।



# आपणतः वस्तूनि आनयतु

| | |
|---|---|
| पिता - सुधीर! आपणतः वस्तूनि आनीतवान् वा? | Sudhir, you have bought the provisions? |
| पुत्रः - न। | No. |
| पि - किमर्थम्? घण्टातः पूर्वम् एव मया उक्तम् आसीत् खलु– शीघ्रं गत्वा आनयतु इति? | Why? I asked you an hour ago to go and get them immediately! |
| पु - माता माम् अन्यत् कार्यम् उक्तवती। | Mother asked me to do something else. |
| पि - तत्समाप्य आपणं गत्वा आगन्तव्यम् आसीत्? | You should have finished it and then gone! |
| पु - गन्तुम् उद्युक्तः आसम्। तावता मित्रं मधुसूदनः आगतः। | I was about to go, but my friend Madhusudan arrived. |
| पि - तेन सह जल्पनं कुर्वन् एतावत्पर्यन्तम् उपविष्टवान् ननु? | Gossipped with him all the time, is that so? |
| पु - न तथा। गृहपाठविषये आवां चर्चां कुर्वन्तौ आस्व। | Not at all. We were speaking about home study. |
| पि - अस्तु तावत्। वस्तूनाम् आनयनं कदा? | That is all right. But when will you get the provisions? |
| पु - शालागमनसमयः आसन्नः। भोजनं कृत्वा ....। | Now it is time for me to go to school. After taking food .... |
| पि - तन्नाम इदानीं वस्तूनि आनेतुं समयः नास्ति इति खलु भवतः आशयः? | That means you have no time to get things from the grocery! |
| पु - सायं शालातः आगत्य अवश्यम् आनेष्यामि। | I will get it positively after returning from school in the evening. |
| पि - किं तेन? मध्याह्नात् पूर्वम् एव वस्तूनि आवश्यकानि इति भवतः मात्रा उक्तम् अस्ति। अहम् आनीय एव कार्यालयं गमिष्यामि। | What is the use, your mother wanted them before noon! I will get it myself and then go to the office. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अचिरात् - Soon
अभिव्यञ्जनम् - Expression
आयकरः - Income–Tax
आरोपणम् - Planting
उष्णीषम् - Turban
कपोलः - Cheek
कलशः - Water–pot
किसलयः - A Sprout
कुसूलम् - Granary
कृशकायः - A Lean man
गृध्रः - Eagle
गोधिका - Garden lizard
चक्षुष्मान् - A man with clear eyesight
चञ्चूः - Beak
चाकलेहः - Chocolate
चित्रीकरणम् - Filming
छत्रम् - Umbrella
तिन्त्रिणी - Tamarind
दन्तधावनम् - Brushing the teeth
नकुलः - Mungoose
निम्बम् - Neem
परिखा - Moat
परोक्षम् - In some one's absence
पित्तलम् - Brass
बुद्बुदः - Bubble
भागिनेयः - Sister's son
भूयसा - Very much
मकरः - Crocodile
मुण्डम् - Head (Separated from the body)
युतकम् - Shirt
यौतकम् - Gifts given to a girl at marriage
विहितवान् - Punished
विषूचिका - Cholera
वेष्टी - Dhoti
व्रीहिः - Paddy
सरीसृपः - A reptile
साभिमानम् - With great regard
हिक्का - Hiccup

* *    * * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जुलै-९२ मासे प्रकटयिष्यामः।



Pramod Bhanushali



I. Umarani

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/-रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, 11 घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **मोदाय अहो, उन्नतां गतिः।**

द्वितीयचित्रम् - **स्यादेव पश्य पतनभीतिः।**

प्रेषकः - श्री. पि.के.एल्. भट्, एं.डि. वि.वि. संस्कृतमहाविद्यालयः, गोकर्णम्-५८१३२६

---




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600-026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

